





॥ श्रीमते रामानुजायनमः ॥ श्रीमते रामानन्दाय नमः ॥

# अथ श्रीसुदर्शन मन्त्रविधिः ।

ॐ अस्य श्रीसुदर्शन षडक्षर महामन्त्रराजस्य शेषभगवान् ऋषिः । गायत्रीछन्दः । ज्रौं रं बीजम् हुं शक्तिः । क्रौं फट् कीलकम् । ममामुकदासस्य सकल विधि सर्वाभीष्ट सिद्धये, वा अमुक यजमानस्य स्त्री पुत्रादीनां सर्वारिष्ट शान्तये तथा वर्तमान दुष्ट ग्रह ग्रसित रोगादिनां सद्यः परिहारार्थे चान्यदपि सर्वसङ्कट भयादि शीघ्रशमनाय अथच सर्वशत्रुपराजयाय सर्वतो मे विजयारोग्यार्थ पुरःसर श्रीसुदर्शन वरप्रसाद सिद्ध्यर्थे च श्री सुदर्शन षडक्षर मूल मन्त्र जपे विनियोगः ।

अथ ऋष्यादिन्यासः

ॐ शेषभगवते ऋषयेनमः शिरसि। ॐगायत्री छन्दसे नमो मुखे। ॐ चक्रराजाय देवतायैनमो हृदये। ॐ ज्रौं रं बीजायनमो नाभौ। ॐ हुं शक्तये नमः कटिदेशे। ॐ क्रौं फट् कीलकायनमः पादयोः। ॐ जपे विनियोगायनमः सर्वाङ्गे। इति।

ॐ स्वाहा नमो मूर्ध्नि ॐ सं नमो नासिकायाम्। ॐ हुं नमो मुखे ॐ स्रां नमो हृदये। ॐ फं नमोगुल्फयोः। ॐ टं नमः पादयोः। ॐ सहस्रार हुँ फट् सर्वाङ्गे। इति। अक्षरन्यासः।

अथ करन्यास

ॐ सं आं आचक्राय स्रां रां रणत्किंकिणीजा-लाय अंगुष्ठाभ्यान्नमः । ॐ हं ह्रीं विचक्राय स्त्रीं रीं रिपुदमनाय तर्जनीभ्यान्नमः । ॐ स्रां क्रौं सुचक्राय स्रं रुं राक्षसादि भय निवारणाय मध्यमाभ्यान्नमः । ॐ रं ज्रां ज्वाला चक्राय सैं रैं सर्वरोगशमनाय अनामिकाभ्यान्नमः । ॐ हुं ज्रौं सूर्यचक्राय सौं रौं रमेशप्रियाय कनिष्ठिकाभ्यान्नमः । ॐ फट् ऐं सुदर्शनचक्राय स्रः रः रक्तमाल्याम्बरधराय करतल करपृष्ठाभ्यान्नम : । इति । अथ हृदयादिन्यासः ।

ॐ सं आं आचक्राय स्रां रां रणत्किंकिणीजालाय हृदयायनमः । ॐ हं ह्रीं विचक्राय स्रीं रीं रिपुदमनाय शिरसे स्वाहा । ॐ स्रां क्रौं सुचक्रायस्रं रुं राक्षसादि भय निवारणाय शिखायै वषट् । ॐ रंज्रां ज्वालाचक्राय स्रैं रैं सर्व रोग शमनाय कवचाय-हुम् । ॐ हुं ज्रौं सूर्य चक्राय स्रौं रौं रमेशप्रियाय नेत्राभ्यां वौषट् । ॐ फट् ऐं सुदर्शनचक्राय । स्रः रः रक्तमाल्याम्बरधराय अस्त्रायफट् । इति हृदयादिन्यासः । अथ दशदिग्बन्धनमपिकुर्यात् ।

ॐ नमो भगवते श्रीसुदर्शनाय सहस्रकोटि सूर्यप्रकाशाय महाज्वालामणि कुण्डलाय स्वाहा ॐ भूर्भुवः स्वरोमिति दशदिग्बन्धनं कुरु कुरु स्वाहा ।



ॐ नमो भगवते सर्वाधारात्मनेऽग्निप्रकाशाय सर्वतो मां रक्ष रक्ष ममोपरि तिष्ठ २ स्वाहा इति ।

स्वशिरसि चक्रमुद्रां प्रदर्शयानेन स्वात्मनोजलेन वेष्टनंकृत्वा ध्यानं कुर्यात् । अथध्यानम् ।

ॐ कल्पान्तार्क प्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं, रक्ताक्षं पिङ्गकेशं रिपुकुल भयदं भीमदंष्ट्राट्टहासम् चक्रं शंखं गदाब्जे पृथुतर मुसलं चाप पाशाङ्कुशान्स्वैर्बिभ्राणं दोर्भिराद्यं मनसिमुररिपुं भावयेच्चक्रसंज्ञम् । इति ।

श्रीसुदर्शन शरणागति मन्त्रेण शरणागतिमपि कुर्यात् तद्यथा ।

ॐ भगवन् सर्व विजयिन् सहस्राराऽपराजित । शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् । इति ।

ॐ सहस्रादित्य संकाशं सहस्र वदनं परम् ।
सहस्रदोः सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥ १ ॥
ॐ हसंतं हार केयूर कटकाङ्गद भूषणम् ।
भूषणैर्भ्राजितं कायं प्रपद्येऽहं सुदर्शनम् ॥२॥
ॐ स्राकारं सहितं मंत्रं जपतां शत्रुनिग्रहम् ।
सर्व दोष प्रणश्यन्तं प्रपद्येऽहं सुदर्शनम् ॥३॥
ॐ रणत्किंकिणि जालेन राक्षसघ्नं महाद्भुतम् ।
व्याप्त केशं बिरूपाक्षं प्रपद्येऽहं सुदर्शनम् ॥४॥
ॐ हुँ कारं भैरवं भीमं प्रणतार्ति हरं प्रभुम् ।
सर्वाभीष्ट प्रदंदेवं प्रपद्येऽहं सुदर्शनम् ॥५॥

ॐ फट्कारांतमनिर्देश्यं शांतं मन्त्रेण संयुतम् ।
प्रसन्नवदनंभद्रं प्रपद्येऽहं सुदर्शनम् ॥ ६ ॥
ॐ एतैःषड्भिःस्तुतोदेवः प्रसन्नं श्रीसुदर्शनम् ।
रक्षांकरोति सर्वात्मा सर्वत्रविजयी भवेत् ।।७।।
ॐ सर्वविघ्नान् सर्वदोषान् विनाशयतिसत्वरम् ।
सुदर्शनस्य मन्त्रेण प्रणतिं कारयेत्पुरा ।।८।।

इस प्रकार मूल मन्त्र से अंगन्यासादि करके यथा कार्य संकल्प करके सहस्राक्षरी का पाठ प्रारम्भ करें ।

## अथ श्रीसुदर्शन सहस्राक्षरी माला मन्त्रः

ॐ अस्य श्रीसुदर्शन सहस्राक्षरी माला मन्त्रस्य अहिर्बुध्न्यो भगवानृषिरनुष्टुप्छन्दः श्रीसुदर्शननारसिंहो देवता ज्रांबीज ज्रींशक्तिः । क्ष्रूं कीलकम् । मम येये प्रतिकूल कारिणस्तेषां संमूलोन्मूलनत्वेन वाङ् मनस्तम्भनार्थे परमन्त्र परयन्त्र परतन्त्र परशून्य सकल ग्रहाणामाकर्षणार्थेमाला मन्त्र पारायणे विनियोगः ।

ॐ आं ह्रीं क्रौं ज्रां ॐ नमो भगवते प्रलय काल महाज्वाल अघोर वीरसुदर्शन नारसिंहाय महा– चक्रराजाय महाबलाय सहस्रकोटि सूर्य प्रकाशाय सहस्रशीर्षाय सहस्राक्षाय सहस्रपादाय सङ्कर्षणात्मने सहस्रदिव्यास्त्र शस्त्रहस्ताय सर्वतोमुखाय सर्वतोमुख-



ज्वल ज्वालामालिकालङ्कृतायआविष्फुलिङ्ग परिस्फुट ब्रह्माण्ड भाण्डाट्टहासाय महापराक्रमाय महोग्रविग्रहाय महावीराय विष्णुरूपिणे व्यतीत कालान्तराय महाभद्ररौद्रावताराय मृत्यु मृत्यु स्वरूपाय किरीट कुण्डलहार केयूर कटकाङ्गुलीय कटिसूत्र मणिनूपुरादि कनकमणिखचित दिव्यभूषणाय महाभीषणाय महाभीमाक्षाय अव्याहत तेजो निधये रक्तचण्डान्तक मण्डित महोरुकाण्डाय दुर्निरीक्षणाय महाप्रत्यक्षकाय ब्रह्मचक्र विष्णुचक्र रुद्रचक्र कालचक्र भूमिचक्रतेजो रूपाय आश्रित रक्षकाय ।

भो भो सुदर्शन नारसिंह मां रक्ष २ मम शत्रुन् नाशय २ पीडित ग्रहान् शीघ्रमाकर्षय आकर्षय आवेशय २ ज्वल २ प्रज्वल २ चण्ड २ प्रचण्ड २ स्फुर २ प्रस्फुर २ घोर घोरतर तनुरूप छट २ प्रच्छट २ २ कह २ वम् २ छिन्धि २ हन्धि २ खट् २ फट् २ जहि २ यंसप्तप्रलय वायुरूपाय रंत्रैताग्निरूपाय ।

भो भो सुदर्शन नारसिंह एहिएहि आगच्छ २ भूतग्रह प्रेतग्रह पिशाचग्रह ब्रह्मराक्षसग्रह साकिनीग्रह डाकिनीग्रह हाकिनीग्रह कृत्रिमग्रह प्रयोगग्रह आवेशयग्रह आगतग्रह अनागतग्रह ब्रह्मग्रह रुद्रग्रह पातालग्रह अन्तरालग्रह निराकारग्रह आचारग्रह

अनाचारग्रह नानाजातिग्रह भूचरग्रह वृक्षचरग्रह पक्षिचरग्रह खेचरग्रह गिरिचरग्रह श्मशानचरग्रह जलचरग्रह कूपचरग्रह देवागारचरग्रह शून्यागार-चरग्रह स्वप्नग्रह दिवग्रह मनोग्रह भीतिग्रह मूकग्रह मूर्खग्रह वधिरग्रह स्त्रीग्रह पुरुषग्रह यक्षग्रह राक्षसग्रह पन्नगग्रह किन्नरग्रह गन्धर्वग्रह साध्यग्रह सिद्धग्रह कामिनीग्रह मोहिनीग्रह पद्मिनीग्रह पक्षिणीग्रह यक्षि-णीग्रह सन्ध्याग्रह मार्गग्रह कुटिलग्रह जूलिङ्गिकग्रह देवग्रह भैरवीग्रह वेतालग्रह ब्राह्मणग्रह क्षत्रीयग्रह वैश्यग्रह शूद्रग्रह चाण्डालग्रह म्लेच्छग्रह शुक्लग्रह शुक्लमानवग्रह शुक्लभक्षणग्रह नाभीमलस्थान सञ्चार ग्रह वाङ्मनश्चक्षुः श्रोत्र जिह्वा प्राणान् आकर्षय २ आवेशय २ स्फोटय २ चट २ हट २ स्तम्भय २ शोषय २ मारय २ मर्दय २ वाञ्छय २ भस्मी कुरु २ ह्रां ह्रीं ह्रुं ह्रैं ह्रौं ह्रः। घ्रां घ्रीं घ्रं घ्रैं घ्रौं घ्रः। श्रां श्रीं श्रं श्रैं श्रौं श्रः महा सुदर्शन चक्रराजाधिराजाय सर्व ग्रहान् आकर्षय २ आवेशय २ सर्वशून्यान् निवारय २ हां हीं हुं फट् स्वाहा।

भो भो सुदर्शन नारसिंह एहि एहि सात्वं संहा-रय २ शरभं कृन्तय २ रुद्रंविद्रावय २ भैरवं भीषय २ प्रत्यङ्गिरं संमर्दय २ कृत्यांस्ताड़य २ चिदम्बरं



बन्धय २ शांभवीं निवर्तय २ कालींदह २ महिषा-सुरींच्छेदय २ दुष्टशक्तिं निर्मूलय २ कुचमारंप्रोषय२ इन्द्रजालादि दुष्ट विद्यां भक्षय २ सुरु २ हुरु २ पर-मन्त्र परयन्त्र परतन्त्र परजप होमसहस्रकोटि पूजां छेदय २ मारय २ मर्दय २ खण्डय २ परकृत्रिम २ विषं निर्विषं कुरु २ अग्निमुख पार्ष्णिमुख सिंहमुख गजमुख वनचरमुखान् चूर्णय २ मारीं विदारय २ कूष्माण्ड वैनायक मारीचगणान् भेदय २ अपस्मारं विमोचय २ अक्षिशूल कुक्षिशूल वक्षोदर शूल गुल्म शूल करमलहस्तशूल पादशूल मेहशूलशिरः कर्णशूल गुदशूल पारवंशूलादि बाधां निवारय २ पाण्डुरोगान् संहारय २ एकाहिक ज्वर द्व्याहिक ज्वर त्र्याहिक ज्वर चातुर्थिक ज्वर पञ्चाहिक ज्वर षडाहिक ज्वर साप्ताहिक ज्वर अष्टाहिकज्वर नवाहिक ज्वर कुष्मा-ण्डज्वर अपस्मारज्वर शीतज्वर ताप ज्वर षाण्मा-सिक ज्वर साम्वत्सरिक ज्वर माहेश्वर ज्वर मारीच ज्वर विरह ज्वर वीरभद्रज्वर पिशाचज्वर पित्तज्वर भूतज्वर प्रेतज्वर दानव ज्वर महाभद्रकाली ज्वर दुर्गाज्वर ब्रह्मज्वर विष्णु ज्वर सौष्ठिकयोगीश्वर ज्वर गन्धर्व ज्वर वेतालादि ज्वरान् नाशय २ सर्वदोषं

दम २ दुरितं हर २ अनन्त तक्षक कालीय पद्मगुलिक शंख पालक कुलानां विषं हन २ खें खें पाशुपतं नाशय २ ब्रह्मास्त्रं स्तंभय २ बकुला मुखीं संहारय २ वाराहीं पच २ तापय २ चण्डं खण्डय २ कङ्काल धारिणीं सन्त्रासय २ शिखिण्डीं भण्डय २ आयुस्तम्भन धातुस्तम्भन सर्वेन्द्रियस्तम्भन प्रमुख दुष्टतन्त्र प्रमुखान् स्फोटय २ चूर्णय २ महानारायणस्त्राय पञ्चदश वर्णरूपाय लल शरणागत रक्षणाय कं हं गं. गं वं वं शं शं अमृत मूर्तये तुभ्यन्नमः। भो भो सुदर्शन नारसिंह मम सर्वारिष्ट शान्तिं कुरु कुरु। ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः नमश्चक्र राजाय ॐसहस्रारहुं-फट् स्वाहा। ॐ सुदर्शनाय विद्महे। हेतिराजाय धीमहि। तन्नश्चक्रः प्रचोदयात्। इति श्री सुदर्शन सहस्राक्षरी महाविद्या माला मन्त्रः * समाप्तः।

श्रीसुदर्शन भगवदर्पणमस्तु।

ॐ आं क्रौं ह्रीं क्ष्रौं हुं फट् ॐनमो भगवते श्रीमहानृसिंहाय वज्रनखाय तीक्ष्ण दंष्ट्राय कराल वदनाय मम सर्व विघ्नान् पच २ मथ २ स्वाहा। ॐ नमो भगवते जनार्दनाय मम सकल दुष्टग्रहान हुं नाशय २ क्ष्रौं मारोग्यं कुरु २ ह्रीं दीर्घायुं देहि २ स्वाहा। इति सर्वरोगनाशनाय आयु वर्धकमन्त्रः। अष्टोत्तर शतं जपेत्। घी शक्कर पंच मेवों की १०८ आहुति नित्य ४० दिन करें।

---

*अयम चक्राङ्किताय नदर्शितव्यं न दातव्यं दानाच्चोभयोर्हा निर्विपरीत फलमप्यतिशीघ्रमुत्पद्यते। अनन्त्यानाड़ीव्रणं नाशय २।



# श्रीसुदर्शनसहस्राक्षरी मन्त्र की पाठविधि

प्रातः शौच स्नानादि विधिपूर्वक सन्ध्यावन्दनादि नित्यकर्म करके गुरुपरम्परानुसंधानपूर्वक श्रीसुदर्शन मन्त्र का अनुष्ठान चक्रांकित श्रीवैष्णव ही करें। तप्त मुद्रा रहित करेगा तो उलटा फल होगा। "सुदर्शन सहस्राक्षरीमाला मन्त्र" के आदि में लिखे प्रमाण सुदर्शन मूल मन्त्र के ऋष्यादि न्यास नित्य कर लेना चाहिये। अर्थात किसी कार्य के लिये दश पाठ करना हो तो प्रथम पाठ ऋष्यादि न्यास सहित करके बीच में आठ पाठ मूल २ करके अन्तवाला पाठ फिर प्रथम पाठवत करें। पाठ करनेवाला श्रीवैष्णव कर्मकांडी जितेन्द्रिय, आहार व्यवहार शुद्ध, सम्प्रदाय रहस्यज्ञ, देवतान्तर भक्त न हो, रहस्यत्रय, तत्वत्रय, आकारत्रय, करणत्रय अर्थ पंचकादि पंचमोशय निष्ठ हो, सत्परम्परानुगत स्वाचार्य निष्ठापूर्वक भगवत भागवत्त कैंकर्य निष्ठा शान्तदान्त इत्यादि गुणविशिष्ठ विद्वान गुरुमुख प्राप्त विधि से श्रीसुदर्शन का नित्याराधन करने वाला असाध्य साधन भी सिद्ध कर सकता है। जप करने वाले के लक्षण शास्त्रों म कहे हैं कि।

मनः प्रवरणं शौचं मौनं मन्त्रार्थं चिन्तनम्।
अव्यग्रत्वमनिर्वेदो जप सम्पत्ति हेतवः ॥ १ ॥
घीरोधृत व्रतमौनी जितक्रोधो जितेन्द्रियः।
धौतवासास्त्वधः शायी विष्णलोके महीयते ॥२॥
गृहे चैकगुणः प्रोक्तो गोष्ठे दशगुणः स्मृतः।
अयुतं पर्वते पुण्ये नद्यां लक्ष गुणो जपः ॥३॥
कोटिर्देवालये प्राप्ते चानन्तो विष्ण सन्निधौ।
सिद्धपीठे तुलस्यग्रे वट पीप्पल सिद्धिदः ॥४॥

इत्युक्त प्रकार से जप तथा जपस्थान की विधि कही है।
पाठारम्भ करने के दिन तिथी तथा संख्यादि भी लिखें हैं यथा :—

स्वाती चित्राचतुर्दश्यां गुरौ वा शनिवासरे ।
सहस्रावरिमन्त्रे हि प्रारभेच्चक्रसन्निधौ ॥ ५ ॥
एकावृत्या ज्वरहरं दशावृत्या ग्रहं जयेत् ।
संख्या सहस्र जापाच्च मन्त्रदेवो प्रसीदति ॥ ६ ॥
त्रिकालं यः पठेन्नित्यं व्याधिभूतादि नाशनम् ।
पठेत्पंचदशावृत्या मनोऽभीष्ट फलं लभेत् ॥ ७ ॥
शतावर्तन मात्रेण सर्वशत्रुक्षयो भवेत् ।
सहस्रावर्तनेनैव ग्रह पीड़ा निवर्तते ॥ ८ ॥
दश सहस्र पाठेन ह्यसाध्यमपि साधयेत् ।
विंशत् त्रिशत्सहस्रैस्तु संग्रामे विजयी भवेत् ॥ ९ ॥
षष्टी सहस्र पाठेन मृत्यु रोगाद्वि मुच्यते ।
लक्षावृत्या जपाल्लोके शापानुग्रह सिद्धयति ॥ १०॥
चक्र सहस्रनामानि चक्रास्त्र सहस्राक्षरीम् ।
चक्राग्रे वैष्णवोनित्यं जप्त्वा पायसमाहुनेत् ॥११॥
तस्य सर्वाणिकार्याणि ध्रुवं सिध्यन्ति नान्यथा ।
साध्यासाध्य प्रयोगेषु यथाकार्यं तथा जपेत् ॥ १२ ॥
भूत प्रेत पिशाचादि ग्राम ग्राहितडाकिनी ।
शाकिनी पूतना घोरा बेताला यक्ष राक्षसाः ॥ १३ ॥
सुराऽसुरा ग्रहासर्वे ह्यष्ट योनिश्च देवताः ।
सर्वत्र स्तम्भिता तिष्ठन् मन्त्रोच्चारण मात्रतः ॥१४॥
आयुरारोग्यमैश्वर्यं ज्ञानं विद्यां बलं धनम् ।
चिन्तितार्थं सुखप्राप्ति लभते नात्र संशयः ॥१५॥
भूर्जपत्रे लिखेन्मंत्रं गोरोचन जलेन च ।
पुरुषस्याथवा स्त्रीणां हस्ते बध्वा विचक्षणा ॥१६॥
विद्रवन्ति च विघ्नानि न भवन्ति भयानितत् ।
सर्वे रोगा विनश्यन्ति ग्रहादि स्वप्नदोषजाः ॥१७॥



राजद्वारे रणे वादे व्यापारे चित्त शान्तये ।
स्मरणाद्धारणावस्य जयस्तस्य भवेद्ध्रुवम् ॥१८॥

इत्यादि श्लोकों में समग्र विधि कही गई है। विधि द्रष्टा गुरु से पूर्ण विधि जान लेवे। क्योंकि "विधि विहीन जाप्येन ह्यनिष्टं फलमश्नुते" अतः विधिपूर्वक करना आवश्यक है। जैसा छोटा बड़ा कार्य हो वैसा हो जप विधि का संकल्प करें। इस मन्त्र में जहां २ मम शब्द आया है वहां २ जिसके नाम से करें उसका नामोच्चारण कर लेवें। आद्यन्त मध्य तीन स्थलों में मम प्रयोग है। पुरुष के लिये ममास्य और स्त्री के लिये ममास्या का अध्याहार कर लेवे। अन्तिम वाला यन्त्र तथा सुदर्शन गायत्री को एक माला अवश्य जप लेवे। और इसी मन्त्र से तस्मं घी मेवा का यथा कार्यतथैव यथाशक्ति पूर्वोत्तर मुख बैठ नित्य हवन करें। अथवा जपान्तर में तर्पण मार्जन ब्राह्मण वैष्णव भोजन कराकर शान्ति अवश्य करा देवे। अभिचार में बेर बंबूर बेल की लकड़ी में पीली सरसों लाल मिरच अपामार्ग काकजंगा हरदी गुड़ गऊ घी मिलाकर दक्षिणाभिमुख करें। मन्त्र वही है। प्रयोजना भी वही है। इसी प्रकार इस मन्त्रसे षड प्रयोग सिद्ध होते हैं। सुदर्शनजी का दिन गुरुवार चित्रानक्षत्र चतुर्दशी तिथि है लालफूल अनार गुलाब गुड़हलादि चढ़ावे। सुदर्शन यन्त्र की पूजा अवश्य करें। रोगी दोषी बाल स्त्री हर प्रकार की पीड़ा निवारण के लिये उक्त मन्त्र से ३ बार अभिमन्त्रित जल पिला देवें। धूप की विभूति शरीर में लगा देवें पीली सरसों पीले कपड़ेमें सुदर्शन मन्त्र यन्त्र भोजपत्र पर लिखकर बांधदेवें तो सब प्रकार की बाधा शांति होगी। ऐसे ही हयग्रीव नारसिंह गरुड़ हनुमान लक्ष्मी आदि के प्रयोग भी श्री वैष्णवों को करना चाहिये। देवतान्तरों के प्रयोग वैष्णवों को नहीं करना चाहिये देवतान्तरों का प्रेमी उपरोक्त प्रयोगों को कभी न करें। इति।

ॐ क्लीं श्रीं ऐं ह्रीं क्ष्रौं ॐ जय २ सुदर्शन नृसिंह प्रें खें रीं ठः स्वाहा

# अथ द्वितीय श्रीसुदर्शन मन्त्र कवचम्

ॐ अस्य श्रीसुदर्शन कवच मन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिरनुष्टुप् छन्दः । श्रीसुदर्शन नारसिंहोदेवता । सौं बीजम् हुं शक्तिः । फट् कीलकम् मम श्रीसुदर्शन वरप्रसादात्सर्वशत्रुभ्यो विजयारोग्ययशःश्रीः प्राप्तये सर्वारिष्ट शान्तये च सर्वतः शत्रुभूतादि दुष्टग्रहकृत सर्वोपद्रव विनाशनार्थे श्रीसुदर्शनमन्त्र कवचं जपे विनियोगः ।

ॐ अहिर्बुध्न्य भगवते ऋषयेनमः शिरसि । ॐ अनुष्टुप् छन्दसेनमो मुखे । ॐ श्रीसुदर्शन नारसिंह देवतायैनमो हृदये । ॐ सौं बीजायनमो नाभौ । ॐ हुंशक्तयेनमो जंघयोः । ॐ फट् कीलकायनमः पादयोः । ॐ जपे विनीयोगाय नमः सर्वाङ्गे । इति ऋष्यादि न्यासः ।

ॐ सं नमो ललाटे । ॐ हं नमो नेत्रयोः ॐ स्रां नमो कण्ठे । ॐ रं नमो हृदये । ॐ हुं नमः कटिदेशे । ॐ फट् नमो जानुपादयोः ॐ सहस्रार हुं फट् नमः सर्वाङ्गे । इत्यक्षरन्यासः ।

ॐ सहस्राराय नमो भ्रुवोर्मध्ये । ॐ हुंनमः सक्थिन्याम् ॐ फट् नमः पादयोः । ॐ सहस्रार हुं फट् सर्वाङ्गे । इति पदन्यासः ।



अथ करन्यासः ।

ॐ सं आचक्राय अंगुष्ठाभ्यान्नमः । ॐ हं विचक्राय तर्जनीभ्यानमः । ॐ स्रांसुचक्राय मध्यमाभ्यान्नमः । ॐ रं असुरान्तक चक्राय अनामिकाभ्यान्नमः । ॐ हुं सर्वलोक रक्षण चक्राय कनिष्ठिका भ्यान्नमः । ॐ फट् सुदर्शन चक्राय करतल कर पृष्ठाभ्यान्नमः । इति करन्यासः ।

ॐ सं आचक्राय हृदयायनमः । ॐ हं विचक्राय शिरसे स्वाहा । ॐ स्रां सुचक्राय शिखायै वषट् । ॐ रं असुरान्तक चक्राय कवचायहुम् । ॐ हुं सर्व लोकरक्षण चक्राय नेत्राभ्यां वौषट् । ॐ फट् सुदर्शन चक्राय अस्त्राय फट् । इतिहृदयादिन्यासः ।

अथ दिग्बन्धनम्

ॐ आसीनचक्राय नमो लंमिन्द्रदिशं बध्नामि । ॐ विचक्राय नमो रमित्यग्निदिशं बध्नामि । सुचक्राय नमः ॐ यमदिशं बध्नामि । ॐ असुरान्तक चक्राय नमः क्षं नैऋतदिशं बध्नामि । ॐ सर्वलोक रक्षणचक्राय नमो वं वायुदिशं बध्नामि । ॐ सुदर्शनचक्राय नमो यं वायुदिशं बध्नामि । ॐ आसूर्य चक्राय नमः सं कुबेरदिशं बध्नामि । ॐ अघोरचक्राय नमो हं ईशानदिशं बध्नामि । ॐ महाभयनिवारण चक्राय नमः आमूर्ध्वदिशं बध्नामि ॐ नारसिंहचक्राय

ankurnagpal108@gmail.com

नमो ज्रैामधोदिशं बध्नामि। ॐ सहस्रार हुं फट् स्वाहा इति सर्वतो दिग्बन्धनं भूयात्। इति। अथध्यानम्

ॐ अक्ष्याद्भास्कर संप्रभाभिरमितो भाभिर्दिशो भासयन् भीमाक्षस्फुर अट्टहास विकसद् दंष्ट्रादि दीप्राननः। दोर्भिश्चक्रदरौ गदाब्ज मुसले खड्गासाश्च पाशाङ्कुशौ, बिभ्रत्पिङ्गल कुन्तलान भगवतश्चक्राभिधानो हरिः। इतिध्यानम्।

ॐ नमो भगवते वासुदेवाय भो भो सुदर्शन दुःखं दारय २ दुरितं हन २ पापं मथ २ अन्तर भवादिक ज्वर माहेश्वर ज्वर ब्रह्मज्वर विष्णुज्वर भूतज्वर विषमज्वर वातज्वर पित्तज्वर श्लेष्मज्वर एकाहिक द्व्याहिक ज्वर त्र्याहिकज्वर चातुर्थिक पक्षमास त्रिमास षाण्मासिक सतत ज्वर सान्निपातिकान्तरगतापस्मारादि निःसारकादिक सर्व ज्वरांश्छेदय २ छिन्धि भिन्धि आरोग्यं कुरु २ हां हां हां हुं हुं हुं फट स्वाहा ॥१॥

ॐ नमो भगवते सुदर्शन चक्राय महास्त्रराजाय सर्व भूत प्रेतादिकृद्भयं नाशय २ शिरः शूलाक्षिशूल हृदयोदर शूल जानुशूल जंघशूल पादशूल पार्श्वशूल सर्वाङ्गशूल वातशूल पित्तशूल श्लेष्मशूलादि सर्वशूलान निर्मूलय २ दानव दैत्यकामिनी बेताल ब्रह्मराक्षस छायाग्रहादि सर्वग्रहान छिन्धि २



भिन्दि २ भस्मीकुरु २ परमन्त्र परयन्त्र परतन्त्रां श्छेदय २ ह्रां फट् ह्रीं हुंफट् स्वाहा ॥२॥ ॐ नमो भगवते गरुड़ध्वजाय एह्येहि सर्वविषादि ज्वर भयं छिन्धि २ भिन्दि २ शंख चक्र गदा पद्मैः सर्वसर्पादिविष भयं हन २ नाशय २ मां रक्ष २ सर्व रक्षा कवचमाज्ञापय जनार्दन हुंफट् स्वाहा ॥३॥ ॐ नमो भगवते ज्रौं सुदर्शनाय महामन्त्र राजाय गन्धर्व वेतालादि भयं छिन्धि २ विदारय २ परमन्त्रान् ग्रसय २ परमन्त्रयन्त्रतन्त्राणि दुष्ट चेटक वारण महामारी बेताल भूत प्रेत पिशाचादीन् भक्षय २ आसीत्तचक्राय विचक्राय असुरान्तक चक्राय सर्वलोक रक्षण चक्राय सुदर्शन चक्राय अस्त्रराजाय हुं फट् स्वाहा ॥४॥ ॐनमो भगवते महासुदर्शन महाचक्राय महाज्वाल आदित्यरूपाय सर्वतो मां रक्ष २ महाबलायज्वालापरिवार्ति ज्रौं सर्व ग्रहान् हन २ हुं फट् स्वाहा। ॥ ५ ॥

ॐ नमो भगवतेऽस्त्रराजाय ज्रौं ह्रीं श्रीं नारसिंहाय ज्रौं देव दानव दैत्यादि पूजिताय प्रदीप्त कोटि आदित्य सम तेजसे वज्रनख दंष्ट्रायुधाय हुं विकीर्ण केसरसटाय क्षुभितमहार्णव भेरि दुन्दुभि निर्घोषाय सर्व मन्त्रोत्तारणाय हृदयाय एह्येहि भगवन्नारसिंह परब्रह्म सर्व सत्वान् स्फुर २

विजृम्भय २ सिंहनादं मुञ्च २ विद्रावय २ ग्रसय २ सर्वमन्त्राणि सर्वामित्रजातिं हन २ संक्षेपय २ हारय २ ज्वालस्फुर २ संघातय २ सर्वतो ज्वाला वज्रसमीरचक्रेण पातालग्रहानुच्चाटय उच्चाटय सर्वतोऽनन्त ज्वाला वज्रशरीर ज्वालेन मर्त्यलोक ग्रहान् उच्चाटय २ सर्वतोऽनन्त ज्वलाशर पञ्जरेण स्वर्गलोक ग्रहाणां हृदयं स्फोटय २ तान्धुनि २ शीघ्रंदह २ पच २ मथ शोषय २ घोषय २ निकृन्तय २ तावत्समागतपातालेभ्यो हुं फट् २ आसुरीभ्योहुंफट् २ जिन्वजातिभ्यो हुंफट् २ मन्त्र जातिभ्यो हुंफट् २ सर्वमन्त्रयन्त्रतन्त्रान् भक्षय २। भो भो नारसिंह विष्णो सर्वपातालेभ्यः सर्व पाप ग्रहेभ्यः शत्रुकृत सर्वोपद्रवेभ्यः सर्वमन्त्र विघ्नेभ्य रक्ष रक्ष २ श्रीं ह्रीं द्रुयैं हुंफट् स्वाहा।

ॐ नमो भगवते अघोर नारसिंह त्रिभुवनाधीश्वर महा भीम पराक्रम सकलविद्या भूतप्रेत पिशाच शाकिनी डाकिनी यक्ष राक्षस यमदूत ब्रह्म राक्षस वेताल भैरव कल्पान्तनाना यक्षणी कंकालादि ग्रहान् मर्दय मर्दय बन्धय २ भक्षय २ मारय २ छेदय २ मथ २ खादय २ क्षोभय २ स्तम्भय २ परकृत मन्त्र यन्त्र तन्त्र चेटक पुत्तलिकादीन् विध्वंसय २ नाशय २ ठं ठं ठं ठं फट् स्वाहा ॥ ७ ॥



ॐ नमो भगते महागरुड़ाय एह्येहि आवेशय २ दुष्टराक्षसान् छिन्धि २ महागरुड़ास्त्राय दुष्ट ज्वर भूतप्रेत पिशाच ब्रह्मराक्षसादीन् तत्कृत व्यथाश्च छिन्धि २ महागरुड़ाय सर्वान् बन्ध २ ॐ हुं फट् स्वाहा ॥८॥

ॐ नमो भगवते श्री रामदूताय महाभय निवारक भूतप्रेत पिशाचादिग्रहान् ब्रह्मराक्षसादिदुष्ट ग्रहान नाशय २ महाभीम पराक्रमाय परकृत मन्त्रयन्त्रतन्त्र चेटक पुत्तलिकादीन् दूरस्थान् परदेशस्थान् गृहस्थितान् सव्याधिस्थितान् दुष्टकर्मस्थितान् बहिर्भूमिस्थितान् उपकेशस्थितान् मूत्रस्थलान् सूत्रकृतवस्त्रा कृतान् अनन्त कृतान् काष्ठकृतान् पाषाणकृतान् रोमकृत केशकृतान् मृतिकादिजीव विशेषकृतान् औषधादिशूलकृतान् वृषभाकारान् घटाकारान् कबन्धाकारान जीवविशेष मुण्डाकारान जलस्थलान् अन्तरिक्षस्थितान् पाषाणमध्यगतान् वृक्षवल्लरुधायमानान् नगरस्थ रुद्रभूमिस्थितान् नानाकाररूपाकारान् शरीरस्यदाह शोककारकान् वायुशूलसंज्ञकान् सर्व गतिछेदकारकान् रक्तशोषक मांसभक्षकान् कुंभलाकृत कारकान् तीक्ष्णशूल कारकान एकाङ्ग हारकान् कपिलकारकान् यन्त्रप्रच्छेद कारकान् परस्पर ग्रहचमूकारकान् नाना

वर्णं सर्वचेटक मानसमोहन वश्यतादितद्भयवेदनां नाशय२ बन्धय२ खादय२ ग्रसय२ शोषय२मन्थय२ छेदय २ भीषय २ मर्दय २ घातय २ रोधय २ शस्त्रघातकवलीकारणमुद्घाटय २ अचिरेण नाशय २ मोचय २ तान सर्वानुनुद २ सुद २ कबंधेन भस्मी कुरु २ श्रीरामदूत वीदय २ ठं ठं ठं ठं हुं फट् स्वाहा।

ॐ नमो भगवते अघोरेश्वर महा भय वारणाय अघोर मूर्तये अघोर भैरवाय परकृत मन्त्र यन्त्र तंत्र चेटकान् बन्धय २ सर्वास्त्र चेटक पुत्तलिकाचेटक पूतनादीन् हन २ भिन्धि २ छिन्धि २ उच्चाटय २ सर्वचेटकान् बन्धय २ केशचेटक चर्म चेटक वस्त्रचेटक मृत्तिकाचेटक गोमयचेटकान् चेटकशूलान् नाशय २ मन्त्रशूलान् परदेशस्थित चेटकान् समीपस्थ चेटकान् गृहस्थित चेटकान् नगरस्थित चेटकान् नाशय २ नानाकारान्नाना कृति कारान् मारकचेटकान् शीघ्रं नाशय २ छेदय २ खादय २ नाना बलिदानभक्षक छेदक चेटकान् उद्घाटय २ नाना छिद्रकार चेटकान् तान् भस्मी कुरु २ ह्रां ह्रां हुँ हुँ हुँ फट् स्वाहा ॥१०॥

ॐ पं ह्रीं श्रीं हुं नमो भगवते हनुमतेऽमुकस्यानुरूपाद्धितय रूपेकार्यं ज्वल ज्वल प्रज्वल २ असाध्यमेतत्कार्यं साधय २ सर्व प्रतिबन्धकेंभ्य प्रतिरक्ष २ हुं फट् स्वाहा।

इति श्रीसुदर्शन संहितायां श्रीसुदर्शन मन्त्र कवचं समाप्तम्।



### अथ द्वितीय कवच की विधिः

इस कवच में १० मन्त्र है प्रथम दस सहस्र पाठ कर लेवें इसका १० पाठ नित्य गुग्गुलादि धूप देकर करैं तो सर्व व्याधि ग्रह बाधा आदि असह्य कष्टों से मुक्त होंगे। रोगी को इस कवच से ७ बार अभिमन्त्रित तुलसीदल जल पीने को देवे तो रोग शान्त होता है। मोरपंख या नीम पत्र से इस कवच से २ बार बच्चों को झाड़े तो बालकृत्या आदि दोष शान्त होते हैं। प्रेतादि उपद्रवों तथा शत्रुराज्यादि युद्ध में भगवत सन्मुख धूप देकर ११ पाठ सुनावे और मन्त्रों के अन्त में १० बार शत्रुपराजय नाम लेकर अग्नि में १० तोला घी शक्कर तथा १० तोला पंचमेवा मिला अन्तिम मन्त्र से ४१ आहुती देवें। अथवा ब्राह्मण के ७ वर्ष के बालक कन्या को खवा देवें। चालिस दिन प्रत्येक का विधान है। पवित्र हो भक्षाभक्ष न खाय चक्रांकित हो वही यह विधि करै करावै। गुरु मुख से पढ करके ही करने से फल मिलेगा। इति।

## अथ तृतीय श्रीसुदर्शन मन्त्र कवचम्

ॐ अस्य श्री सुदर्शन कवच मन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिरनुष्टुप् छन्दः श्रीसुदर्शन महापुरुषो विष्णुर्देवता, ॐ बीजम् ह्रीं शक्तिः श्रीं कीलकम् श्रीसुदर्शनवरप्रसाद सिद्ध्यर्थे तत्प्रसन्नार्थे च श्री सुदर्शन मूलमन्त्र कवचं जपे विनियोगः।

ॐ आचक्राय स्वाहा अंगुष्ठाभ्यां नमः। ॐ विचक्राय स्वाहा तर्जनीभ्यां नमः ॐ सुचक्राय स्वाहा

मध्यमाभ्यांनमः । ॐ त्रैलोक्य रक्षण चक्राय स्वाहा अनामिकाभ्यांनमः । ॐ ज्वाला चक्राय स्वाहा कनिष्ठिकाभ्यांनमः । ॐ असुरान्तक चक्राय स्वाहा करतलकर पृष्ठाभ्यांनमः । इति करन्यासः ।

ॐ सं आचक्राय हृदयानमः । ॐ हं विचक्राय शिरसे स्वाहा । ॐ स्रां सुचक्राय शिखायै वषट् । ॐ रं असुरान्तक चक्राय कवचायहुम् । ॐ हुं सर्वलोक रक्षण चक्राय नेत्राभ्यां वौषट् । ॐ फट् सुदर्शन चक्राय अस्त्राय फट । इति हृदयादिन्यासः ।

ॐ नमो भगवते ज्वाला चक्राय ऐंद्रं दिशं चक्रेण बध्नामि ॥१॥ ॐ नमो भगवते ज्वाला चक्राय आग्नेयीं दिशं चक्रेण बध्नामि ॥२॥ ॐ नमो भगवते ज्वाला चक्राय दक्षिणां दिशं चक्रेण बध्नामि ॥३॥ ॐ नमो भगवते सुदर्शन, ज्वाला चक्राय नैऋत्यां दिशं चक्रेण बध्नामि ॥ ४ ॥ ॐ नमो भगवते ज्वाला चक्राय वारुणीं दिशं चक्रेण बध्नामि ॥ ५ ॥ ॐ नमो भगवते ज्वाला चक्राय वायवीं दिशं चक्रेण बध्नामि ॥ ६ ॥ ॐ नमो भगवते ज्वाला चक्राय कौबेरीं दिशं चक्रेण बध्नामि ॥७॥ ॐ नमो भगवते ज्वाला चक्राय ईशान्या दिशं चक्रेण बध्नामि ॥८॥ ॐ नमो भगवते ज्वाला चक्राय उर्ध्व दिशं चक्रेण बध्नामि ॥९॥ ॐ नमो भगवते ज्वाला चक्राय अधो दिशं चक्रेण



बध्नामि॥१०॥ ॐ नमो भगवते ज्वालाचक्राय सर्वतो दिग्बन्धमन् भूयात् । ॐ सहस्रार हुंफट् इति षडक्षरमंत्रमष्टोत्तर शतं जपेत् । ॐ सुदर्शनाय विद्महे हेतिराजाय धीमहि । तन्नश्चक्रः प्रचोदयात् । इति सुदर्शन गायत्रीश्च जपेत् अथध्यानम्।

तं देवदेव मुनि वन्दित पाद पद्मम् चक्रादिषोडश भुजं ज्वलन प्रकाशम् । नानाविधाभरण भूषित सर्व गात्रं चक्रादिदेवमनिशं हृदि चिन्तयामि । शंखं चक्रं सचापं शरपरशुधरं शूलपाशांकुशाब्जं बिभ्राणं वज्र खेटं हल मुशल गदा कुन्तमत्युग्र दंष्ट्रम् । ज्वाला केशं त्रिनेत्रं ज्वलदनल निभं हारकेयूर भूषं ध्याये त्वष्टकोणसंस्थं सकलरिपुगण प्राण संहार चक्रम् ।

ॐ नमो भगवते भो भो सुदर्शन दुष्ट दारिद्र्यं दुरितश्च हन हन पापं मथ मथ ममारोग्यं कुरु कुरु ठः ठः ह्रीं ह्रीं हुं. ॐ सहस्रार हुं फट् स्वाहा ।

अथ प्रार्थना

ॐ त्रैलोक्याभयकर्तारमाज्ञापय जनार्दन ।
सर्व दुःखानि रक्षांसि क्षयं नयतु सत्वरम् ॥१॥
प्राच्यां रक्ष प्रतीच्यांश्च दक्षिणोत्तरयोस्तथा ।
रक्षां करोतु सर्वत्र नृसिंहश्च स्वगर्जितैः ॥२॥
ॐ महादैत्यान् रक्षर सर्वशत्रून् हन २ फट् स्वाहा ।
ॐ सहस्रादित्य सङ्काशं सहस्र वदनं परम् ।

सहस्रदोः सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥३॥
हसंतं हार केयूर कटकाङ्गद भूषणम् ।
भूषणैर्भ्राजितं कायं प्रपद्येऽहं सुदर्शनम् ॥४॥
स्राकारं सहितं मंत्रं जपतां शत्रुनिग्रहम् ।
सर्व रोग प्रणश्यन्तं प्रपद्येऽहं सुदर्शनम् ॥५॥
रणत्किंकिणि जालेन राक्षसघ्नं महाद्भुतम् ।
व्याप्त केशं बिरूपाक्षं प्रपद्येऽहं सुदर्शनम् ॥६॥
हुं कारं भैरवं भीमं प्रणतार्ति हरं प्रभुम् ।
सर्वाभीष्टप्रदं देवं प्रपद्येऽहं सुदर्शनम् ॥७॥
फट्कारान्तमनिर्देश्यं शान्तं मन्त्रेण संयुतम् ।
प्रसन्नवदनं भद्रं प्रपद्येहं सुदर्शनम् ॥८॥
एतैः षड्भिःस्तुतोदेवः प्रसन्नः श्रीसुदर्शनः ।
रक्षां करोति सर्वात्मा सर्वत्र विजयी भवेत् ॥९॥
सर्व बिघ्नान सर्व दोषान विनाशयति सत्वरम् ।
ॐ सुदर्शन महाज्वाल सूर्यकोटि समप्रभ ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय ॥१०॥
यस्य स्मरण मात्रेण विद्रवन्त्यसुरादयः ।
सहस्रार नमस्तुभ्यं विष्णुपाणितलाश्रयः ॥११॥
क्षिप्रं सुदर्शन चक्रं ज्वालामालाति भीषणम् ।
सर्वरोगप्रशमनं कुरुदेव वराच्युत ॥१२॥
सुदर्शन महाचक्र गोविन्दस्य वरायुध ।
तीक्ष्णधार महावेग सूर्यकोटिसमप्रभ ॥१३॥



त्रैलोक्यं रक्ष रक्ष त्वं दुष्टदानवमर्दन ।
सुदर्शन महाज्वाल छिन्धि छिन्धि महागदम् ॥१४॥
छिन्धि वातञ्च पितञ्च छिन्धि घोरं महाविषम् ।
रुजंदाहञ्च शूलञ्च निमिषं ज्वाल गर्धभम् ॥१५॥
सुदर्शनस्य मंत्रेण ग्रहात्यान्तु दिशोदशः ॥ १६ ॥
ॐ नमो भगवते सुदर्शनाय महद्गद महाचक्र महानेत्र भयङ्कराय सर्वदुष्ट भयङ्कराय सर्व शत्रून् नाशय २ भक्षय २ परतन्त्र परयन्त्र परमन्त्रान ग्रसय २ भक्षय २ परविद्याश्च ग्रसय २ भक्षय २ दैत्यदानवब्रह्मराक्षसान् ग्रसय २ भक्षय २ शाकिनी डाकिनी वैतालादीन् ग्रसय २ भक्षय २ गन्धर्व यक्ष भूत प्रेतपिशाचान् ग्रसय २ भक्षय २ दाहय २ मर्दय २ छिन्धि २ भिन्धि २ खादय २ कालय २ कुरु २ ॐ नमो भागवते सहस्रार हुंफट् स्वाहा ।
ॐ श्रीचक्रराजाय सुदर्शनायनमः स्वाहा ।
भुव्यन्तरिक्षे च तथापार्श्वतः पृष्ठतोऽग्रतः ।
रक्षां करतु भगवान् विश्वरूपी जनार्दनः ॥१७॥
यथा विष्णोः स्मृतेः सद्यः संक्षयं याति पातकम् ।
तथाऽस्य सकलं दुखं प्रशाम्यतु सुदर्शनम् ॥१८॥
इदं रूपं विचित्रंवै सर्वथा भय नाशनम् ।
सर्वाभीष्टप्रदं सर्वं सर्व रोग निवारणम् ॥१९॥
इति श्रीसुदर्शन संहितायां सुदर्शन कवचं समाप्तम् ।

# चतुर्थ श्रीसुदर्शन कवचम्

ॐ अस्य श्रीसुदर्शन कवच महामन्त्रस्य आदि पुरुष ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। षड्चक्रात्मक भगवान श्रीसुदर्शनो- देवता। सहस्रार' मिती बीजम्। आदि मूल हुंकारमग्निरिति शक्तिः। सुधामंडल संविष्टेति हृदयम। सूक्ष्माधार महावेगेतिफट् कीलम्। सुदर्शन महाज्वालेत्यस्त्रम्। सुदर्शन नारसिंह क्ष्रौमिति कवचम्। सर्वविद्यार्णवः सहस्रारेतिपरमोमन्त्रः। मम सर्वारिष्ट शान्तये श्रीसुदर्शन वरप्रसाद सिद्धयर्थे च श्रीसुदर्शन कवचं पाठे विनियोगः।

अथ ऋष्यादिन्यास

ॐ ब्रह्माऋषयेनमः शिरिस। ॐ अनुष्टुप्छन्दसे नमोमुखे। ॐ श्रीसुदर्शनदेवतायैनमोहृदये। ॐ सहस्रार बीजाय नमो नाभ्याम्। ॐ आदिमूल हुंकारशक्तयेनम उदरे। ॐ सुधामण्डल संविष्ट हृदयाय नमः कटि देशे। ॐ सूक्ष्माधार महावेगेति फट् कीलकाय नमोगुह्ये। ॐ महाज्वालेत्यस्त्राय नमो जङ्घयोः। ॐ सुदर्शन नारसिंह क्ष्रौं कवचाय नमो गल्फयोः। ॐ सर्वविद्यार्णव सहस्रार मन्त्रायनमः पादयोः। ॐ श्रीसुदर्शन कवचं जपेविनियोगायनमः सर्वाङ्गे। इति।

अथ करन्यासः

ॐ सं आचक्राय अंगुष्ठाभ्यान्नमः। ॐ इं विचक्राय तर्जनीभ्यान्नमः। ॐ स्रांसुचक्राय मध्यमाभ्यान्नमः। ॐ रं असुरान्तक चक्राय अनामिकाभ्यान्नमः। ॐ हुं सर्वलोक रक्षाए चक्राय कनिष्ठिकाभ्यान्नमः। ॐफट् सुदर्शन चक्राय करतल कर पृष्ठाभ्यान्नमः। इति करन्यासः।

ॐ सं आचक्राय हृदयायनमः। ॐ हुं विचक्राय शिरसे स्वाहा। ॐ स्रां सुचक्राय शिखायै वषट्। ॐ रं असुरान्तक चक्राय कवचायहुम्। ॐ हुं सर्व लोकरक्षाए चक्राय नेत्राभ्यां वौषट ॐ फट सुदर्शन चक्राय अस्त्राय



फट्। इति हृदयादिन्यासः।

अथ दिग्बन्धनम्

ॐ नमोभगते श्रीसुदर्शनाय सहस्रकोटि सूर्यप्रकाशाय महाज्वालामणि कुण्डलाय स्वाहा ॐ षड् चक्रसहस्रार भगवन्! ॐ भूर्भुवः स्वरोमिति दश दिग्बन्धनं करु कुरु स्वाहा।

ॐ नमोभगवते सर्वाधारात्मनेऽग्निप्रकाशाय सर्वतो मां रक्ष रक्ष ममोपरि तिष्ठ २ स्वाहा इति स्व शिरसि चक्रमुद्रां प्रदर्श्यानेन स्वात्नोजलेन वेष्ठनंकृत्वा ध्यानं कुर्यात्। अथध्यानम्।

शङ्खं शार्ङ्गं सखेटं हलपरशुगदा कुन्तपाशान्दधानं त्वेन्यैर्वामैश्च चक्रव्वसि मुसललसद्वज्रश् लाङ्कुशाग्रीन्। ज्वाला केशं किरीटं ज्वलदनलनिभं वह्निमग्रस्थपीठं प्रत्यालीढं त्रिनेत्रं रिपुगणदमनं भावयेच्चक्रराजम्॥

ॐ मरतकं मे सहस्रारः फालंपातु सुदर्शनः।
भ्रुवौ मे चक्रराट् पातु नेत्रे द्वेन्दुलोचनः ॥१॥
कर्णौ वेदस्तुतः पातु पातु घ्राणं विभीषणः।
महादीप्तः कपोलौ मे ओष्ठं रुद्रवर प्रदः ॥२॥
दन्तान्पातु जगद्वन्द्यो रसनां मम सर्वदा।
सर्वविद्यार्णवः पातु गिरंवागीश्वरो मम ॥३॥
वीरसिंहो मुखं पातु चिबुकं भक्तवत्सलः।
कण्ठं मे सर्वदा पातु मेघ गम्भीर निस्वनः ॥४॥
मम स्कन्धयुगं पातु धराभारापहारकः।
बाणासुर भुजारण्य दावाग्निः पातु मे भुजो ॥५॥
कालनेमिशिरश्छेत्ता पातु मे कूर्परद्वयम्।
करौ दिव्यायुधः पातु नखान्वज्रनखोपमः ॥६॥
कुक्षौ पातु महाशूरः स्तनौ शत्रुनिषूदनः।
पातु मे हृदयं भक्तजनानन्दश्च सर्वदा ॥७॥
सर्व शास्त्रार्थ सद्भूति हेतु पातूदरं मम।
वक्षः पातु महाधारो दिवि दानव मर्द्दनः ॥८॥

ankurnagpal108@gmail.com

पार्श्वौ मे पातु दीनार्तशरणागत वत्सलः ।
सर्वदा पृष्ठदेशं मे देवानामभयप्रदः ॥९॥
नाभिं षट्कोणधामा मे पातु घण्टारवः कटिम् ।
आदिमूलः पुमान् पातु गुह्यदेश निरन्तरम् ॥१०॥
ऊरू पातु महाशूरो जानुनी भीमविक्रमः ।
जङ्घे पातु महावेगो गुल्फौ पातु महाबलः ॥११॥
पादौ पातु सदा श्रीदो ब्रह्माद्यैरभिवन्दितः ।
पातु पादतलद्वन्द्वं विश्वंभरो निरन्तरम् ।१२।
सुदर्शननृसिंहो मे शरीरं पातु सर्वदा ।
मम सर्वाङ्गरोमाणि ज्वाला केशस्सरक्षतु ।१३।
अन्तर्बहिश्च मे पातु विश्वात्मा विश्वतोमुखः ।
रक्षाहीनश्च यत्स्थानं प्रचण्डस्तत्र रक्षतु ॥१४॥
सर्वतो दिक्षु मे पातु ज्वालाशतपरिवृतः ।
त्रिनेमिः पातु मत्प्राणान् भ्रातॄन्पात्वनलद्युतिः ॥१५॥
भार्या लक्ष्मी सखः पातु पुत्रान्पातु सुदर्शनः ।
श्रीकरो मे श्रियः पातु बन्धून्पातु बलाधिकः ॥१६।
गोपांश्चैव पशून् पातु सहस्रारधरस्सदा
क्षेत्रं विश्वम्भरः पातु मित्रं पात्वघनाशनः । ७ ।
दिवारात्रौ च मां पातु अहिर्बुध्न्यवरप्रदः ।
षोडशोद्बुशोङ्गबाहुस्तु पातु मे राजसम्मुखम् ॥१८।
वैरिविद्वेषसङ्के तु संग्रामे शत्रुसूदनः ।
आकान्तारा अबाधांच त्रासयेत्सर्वं कालिकम् ॥१९।
आधिव्याधि महाव्याधि मध्यतोपद्रवेपि च ।
अपमृत्यु महामृत्यु नाशयेच्चक्रनायकः ॥२०॥
वरप्रयुक्त मन्त्राश्च यन्त्र तन्त्र विभंजनः ।
सुदर्शनोऽयमस्माकं दुर्दशादुःखनाशनः ॥२१॥
सर्वसम्पत्प्रदाता मां चक्रराजो निरन्तरम् ।



जयं पातु जगद्वन्द्यो मानसामक्षयप्रदः ॥२२॥
प्रमादाख्यास्त्रधामासौ ज्ञानं रक्षतु सर्वदा ।
अणिमादि महैश्वर्यं पातु साम्राज्यसिद्धिदः ॥२३॥
तिर्यग्ज्वालाग्नि रूपश्च नष्टराज्यार्थदो मम ।
राज्यं पातु सहस्रारः पावार्ति पातु वाच्युतः ॥२४॥
चतुरंगबलस्तोमं रक्ष त्वं चक्र भावन ।
ज्योतिर्मयश्चक्रराजः सर्वान्वरणरक्षकः ॥२५॥
अखण्डमण्डितः पातु परचक्रापहारकः ।
त्रिविक्रमश्चक्रराजः पातु धैर्यं सदा मम ॥२६॥
नभो दशदिश व्याप्तिः कीर्ति पातु सुदर्शनः ।
आयुर्बलं धृति पातु लोकत्रयभयावहः ॥२७॥
सुधामण्डल संविष्ठो मायापंच सुशीतलः ।
राजद्वारे सभामध्ये पातुमां चण्ड विक्रमः ॥२८॥
पूर्वे सुदर्शनः पातु, चाग्नेये, पातु चक्रराट् ।
याम्ये रथांगकः पातु त्रिनेमि पातु नैरृते ॥२९॥
लोकत्रय प्रभाकार ज्वालो रक्षतु पश्चिमे ।
षट् कोणं पातु वायव्ये सहस्रराजोत्तरांदिशम् ॥३०।
ऐशान्यां चक्रराट् पातु मध्येभूचक्रचक्रिणः ।
अनन्तादित्यसङ्काशः क्ष्मान्तरिक्षौ च पातु मे । ३१ ।
सर्वतोदिशु मे पातु ज्वाला सहस्र संवृतः ।
एवं सर्वत्र संरक्ष सर्वदा सर्वरूपवान् ।३२॥
सकारः पृथिवी ज्ञेयो हकारो अपउच्यते ।
स्राकारो वायुरुक्तश्च रकारोऽम्बर उच्यते ॥३३।
हुंकारमग्निरित्याहुः फट्कारं सूर्यरूपकम् ।
स्वाहाकारं न्यसेन्मूर्ध्नि पीतरक्तवर्णकम् ॥३४॥
सकारं नासिका यान्तु हकारं वदने न्यसेत् ।
स्राकारं हृदये चैव सृष्टि संहार कारणम् ॥३५॥

रकारं विन्यसेद्गुह्ये हुंकारं जानुदेशके ।
फकारं गुल्फ देशे तु टकारं पादयोर्न्यसेत् ॥३६॥
सर्वाणि चैव वर्णानि जध्वाग्रङ्गुलपर्वसु ।
क्षिप्रं सोदर्शनं चक्रं ज्वाला मालातिभीषणम् ॥३७॥
सर्वदैत्यप्रशमनं कुरुदेव वराच्युत ।
सुदर्शन महाज्वाल छिन्धिभिन्धि सुवेदनाम् ॥३८॥
पर यन्त्रंच तन्त्रंच छिन्धि मन्त्रौषधादिकम् ।
सुदर्शन महाचक्र गोविन्दस्य वरायुध ।३६॥
सूक्ष्माधार महावेग छिन्धि छिन्धि सुभैरव ।
छिन्धि वातंच लतंच छिन्धि घोरं महद्विषम् ॥४०॥
इतिमौदर्शनं दिव्यं कवचं सर्वकामदम् ।
सर्वबाधा प्रशमनं सर्वव्याधिविनाशनम् ॥४१॥
सर्वशत्रुक्षयकरं सर्वमङ्गल दायकम् ।
त्रिसन्ध्यं विजयं नृणां सर्वदा विजयप्रदम् ॥४२॥
सर्वपापप्रशमनं भोगमोक्षैक साधनम् ।
प्रातरुत्थाय यो भक्त्या पठेदेतत्सदा नरः । ४३ ।
तस्य सर्वेषु कालेषु विघ्नः क्वापि न जायते ।
यक्षराक्षस वेताला भैरवाश्च विनायकाः । ४४ ।
शाकिनी डाकिनी ज्येष्ठा निद्रा बालग्रहादयः ।
भूत प्रेत पिशाचाद्या अन्ये दुष्टग्रहा अपि ॥४५॥
कवचस्यास्य जप्तारं दृष्ट मात्रेण तेऽखिलाः ।
पलायन्ते यथा नागाः पक्षिराजस्य दर्शनात् ॥४६॥
चक्रप्रयोग माहात्म्यमशक्यं वक्तुमर्हति ।
असाधारण सामर्थ्यं वैषम्य जननाश कृत् ॥४७॥
अस्याथुत पुरश्चर्यं दशांशं विधिनाचरेत् ।
हवनं तपणं चैव तर्पणं गन्धवारिणा ॥४८॥
पुष्पांजलिदशांशेन मिष्ठान्नं सघृतप्लुतम् ।



शङ्खचक्राङ्कितान्विप्रान् भोजयेत्सुसमाहितः ॥४९॥
सर्वसिद्धिमवाप्नोति नात्रकार्याविचारणा ।
चतुर्विंशद् द्विजान्भोज्य चान्यत् कार्याणि साधयेत् । ५०॥
विन्यस्याङ्गेऽदं धीरो युधार्थं योभिगच्छति ।
रणेजित्वाऽखिलांछत्रून विजयी भवति ध्रुवम् ॥५१॥
मन्त्रिताम्बुत्रिवारंवा पिबेत्सप्तदिनावधि ।
व्याधयः प्रविनश्यन्ति सकलाः कुक्षिसंभवाः ॥५२॥
मुखप्रक्षालने नेत्र नासिकारोगनाशनम् ।
भीतानामभिषेकंच महाभयनिवारणम् ॥५३॥
सप्ताभिमन्त्रितानेन तुलसीमूलमृत्तिका ।
लेपनान्नश्यन्ति ते रोगाः सद्यः कुष्टादयोऽखिलाः ।५४ ।
ललाटे तिलकं नृणां मोहनं सर्ववश्यकृत् ।
परेषांमन्त्रयन्त्राणि तन्त्राण्यपि विनाशकृत् ॥५५॥
अलिसर्पादिसर्वेषां विषापहरणं परम् ।
सौवर्णे रजतेवापि भूर्जेताम्रादिकेऽपिवा ॥५६॥
लिखित्वा त्वर्चयेद्भक्त्या स श्रीमान् भवति ध्रुवम् ।
बहुना किमिहोक्तेन यद्यद्वाञ्छति यो नरः ।
सकलंप्राप्नुयादस्य कवचस्य प्रसादतः ॥५७॥
ध्वजागजानामथवाजिसाधके सरेखुखड्गेध्यवीरपट्टके ।
लिखेच्चचक्रं विजयेषु संयुगेष्वमोघ वीर्यं जयमाप्नुयाद् ध्रुवम् ।५८॥
श्रियस्य ये हेरवभि पूजनीयमभीप्र सिद्धि कुरुते सुदर्शनः ।
कन्या च भर्तुः पुरुषो वधूनां लभेतविद्या धनधान्ययुक्तम् ।५९ ।
आयुष्वायुष्यमाप्नोति दुःस्तनी ःसुस्तनो भवेत् ।
वन्ध्या च लभते पुत्रान् सुदर्शन जपाविदम् ॥६०॥
चक्राङ्किताय दातव्यं ह्यन्येभ्यो न कदापि च ।
मंत्रंच मंत्र कवचं पठित्वा सर्व कामधुक् ॥६१॥
इति श्री विहगेन्द्रसंहितायां श्री सुदर्शनकवचं समाप्तम् ।

शङ्खं चक्रं गदां पद्मं मुसलं खड्गमेव च
धेनुं च यमपाशं च मुद्रा ह्येताः प्रकीर्तिताः



# * अथ श्रीनरसिंह कवचम् *

ब्रह्मोवाच-अनेक मन्त्र कोटीशो नृसिंहनाम मुच्च रेत्। अनेक विधि रक्षायां विषरोग निवारणम् ॥१॥

ॐ अस्य श्रीलक्ष्मी नृसिंह कवचमहामन्त्रस्य ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, श्रीनृसिंहोदेवता, ॐ क्ष्रौं बीजम्, ॐ रौं शक्तिः, ॐ ऐं क्लीं कीलकम् मम सर्व रोग शत्रु चौर पन्नग व्याघ्र वृश्चिक भूत प्रेत पिशाच शाकिनी डाकिनी यन्त्रमन्त्रादि सर्व विघ्न निवारणार्थे नृसिंह कवचमहामन्त्र जपे विनियोगः।

अथ ऋष्यादिन्यासः।

ॐ ब्रह्माऋषयेनमः शिरसि। ॐ अनुष्टुप् छन्दसेनमोमुखे। ॐ श्रीलक्ष्मी नृसिंहदेवतायै नमो हृदये। ॐ क्ष्रौं बीजायनमोनाभ्याम्। ॐ रौं शक्तयेनमः कटिदेशे। ॐ ऐं क्लीं कीलकाय नमः पादयोः। ॐ नृसिंहकवचमहामन्त्र जपेविनियोगायनमः सर्वाङ्गे।

अथ करन्यासः।

ॐ क्ष्रौं अंगुष्ठाभ्यांनमः। ॐ प्रौं तर्जनीभ्यां नमः। ॐ ह्रौं मध्यमाभ्यांनमः। ॐ रौं अनामिकाभ्यांनमः। ॐ ब्रौं कनिष्ठिकाभ्यांनमः। ॐ जौं करतलकर पृष्ठाभ्यांनमः। इति करन्यासः।



अथ हृदयादिन्यासः।

ॐ क्ष्रौं हृदयायनमः। ॐ प्रौं शिरसे स्वाहा। ॐ ह्रौं शिखायै वषट्। ॐ रौं कवचाय हुम्। ॐ ब्रौं नेत्रत्रयाय वौषट। ॐ जौं अस्त्राय फट्। इति।

अथध्यानम्।

ॐ सत्यं ज्ञान सुखस्वरूप ममलं क्षीराब्धि मध्ये स्थितम् योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम्। तीक्ष्णं चक्र पिनाक सायक वरान्बिभ्राण मर्कच्छविं छत्री भूतफणीन्द्रमिन्दुधवलं लक्ष्मी नृसिंहं भजे ॥१॥ कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं, पादादानाभिरक्तप्रभमुपरिसितं भिन्नदैत्येन्द्रगात्रम्। शंखचक्राब्ज पाशांकुशकुलिश गदादारुणान युद्धहंतं, भीमं तीक्ष्णाग्रदंष्ट्रं मणिमय विविधा कल्पमीडे नृसिंहम् ॥२॥ गर्जन्तं गर्जयन्तं निजभुजपटलं स्फोटयन्तं हरन्तं, रूप्यन्तं तापयन्तं दिविभुविदितिजं क्षेपयन्तं शिरोऽन्तम्। क्रन्दन्तं रोषयन्तं दिशिदिशिसनतं संरभन्तं हरन्तं, वीक्षन्तं घूर्णयन्तं करनिकरशतैर्दिव्य सिंहंनमामि।३। इति

ॐ क्ष्रौं प्रौं ह्रौं रौं ब्रौं जौं नमः स्वाहा। ॐ वज्रनखाय विद्महे। तीक्ष्ण दंष्ट्राय धीमहि तन्नोनृसिंहः प्रचोदयात्। ॐ नमो नृसिंहाय सर्व दुष्ट विनाशनाय सर्व जन मोहनाय सर्व राज्यवश्यं कुरु कुरु

स्वाहा । ॐ नमो नृसिंहाय नृसिंहराजाय नरकेशाय नमो नमस्ते । ॐ नमः कालाय काल दंष्ट्राय कराल वदनाय च ॐ उग्राय उग्र वीराय उग्र विकटाय उग्र वज्राय वज्र देहिने रुद्राय रुद्रघोराय भद्राय भद्र कारिणे ॐ ज्रौं ह्रीं नृसिंहायनमः स्वाहा । ॐ नमो नृसिंहाय कपिलाय कपिल जटाय अमोघ वाचाय सत्यं सत्यं ब्रतं महोग्र प्रचण्ड रूपाय ॐ ह्रां ह्रीं ह्रौं ॐ ह्रुं ह्रुं ह्रुं ॐ क्ष्रां ज्रीं ज्रौं फट् स्वाहा । ॐ नमो नृसिंहाय कपिल जटाय ममसर्व रोगान् बन्ध २ सर्व ग्रहान् बन्ध बंध सर्वदोषादीन् बन्ध बन्ध, सर्व वृश्चिकादीनां विषं बन्ध बन्ध सर्व भूत प्रेत पिशाच शाकिनी डाकिनी यन्त्र मन्त्रादीन् बन्ध २ कीलय कीलय चूर्णय चूर्णय मर्दय मर्दय ऐं ऐं एहि एहि मम येये विरोधिनस्तान सर्वान् सर्वतो हन् हन् दह दह मथ् मथ पच पच चक्रेण गदा वज्रेण भस्मी कुरु कुरु स्वाहा, ॐ क्लीं श्रीं ह्रीं ह्रीं ज्रीं ज्रीं ज्रौं श्रीनृसिंहायनमः स्वाहा ।

ॐ आं ह्रीं ज्रौं क्रौं हुं फट् ॐ नमो भगवते सुदर्शन नारसिंहाय अमुकस्य अमुकस्मात् विजय रूपे कार्ये ज्वल २ प्रज्वल २ असाध्यमेतत्कार्यं शीघ्रं साधय २ एनं सर्वप्रतिबन्धकेभ्यः सर्वतो रक्ष २ हुँ फट् स्वाहा । ॐ ज्रौं ॐ नमो भगवते नारसिं-



हाय एतद्दोषं प्रचण्ड चक्रेण जहि २ स्वाहा । ॐ नमोभगवते महानृसिंहाय कराल वदन दंष्ट्राय मम विघ्नान् पच २ स्वाहा ।

ॐ नमो नारसिंहाय हिरण्यकश्यप वक्षस्थल विदारणाय त्रिभुवन व्यापकाय भूतप्रेत पिशाच डाकिनी शाकिनी कालनोन्मूलनाय ममशरीर स्थम्भोद्भव समस्तदोषान् हन २ शर २ चल २ कम्पय २ मथ २ हुं फट् ठः ठः ।

ॐ नमो भगवते भो भो सुदर्शन नारसिंह ॐ आं ह्रीं क्रौं ज्रौं हुं फट् ॐ सहस्रार ममाङ्ग वर्त्तमानममुक रोगं दारय २ दुरितं हन २ पापं मथ २ आरोग्यं कुरु २ ह्रां ह्रीं ह्रुं ह्रैं ह्रौं ह्रः हुं फट् ममशत्रुं हन् हन् द्विष २ तदपचयं कुरु २ मम· सर्वार्थ साधय २ ॐ नमो भगवते नारसिंहाय ॐ क्ष्रौं क्रौं आं ह्रीं क्लीं ऐं श्रीं रां स्फ्रैं ब्लुं यं रं लं वं षं स्रां हुं फट स्वाह ।

ॐ नमो भगवते नारसिंहाय नमस्तेजस्ते-जसे । आविराविर्भव वज्रनख वज्रदंष्ट्र कर्माशयान रंधय २ तमो ग्रस २ ॐ स्वाहा अभयमयात्मनि भूयिष्ठां ॐ ज्रौम् । ॐ नमो भगवते तुभ्यं पुरुषा-यमहात्मने । हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने । ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतो मुखम् ।

नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

इति श्रीनृसिंह पुराणे ब्रह्म सावित्री सम्वादे नृसिंह कवचं समाप्तम्

## श्रीनृसिंह कवच मन्त्र विधि

यह नृसिंह कवच प्रत्यक्ष फल देने में बड़ा उग्र हैं। इसके सात पाठ कर जल अभिमन्त्रित कर रोगी को ४० दिन पिलावे तो असाध्य रोग भी साध्य होता हैं। इसके प्रथम ३२ हजार पाठ कर लेवे तो कवच सिद्ध हो जाता हैं। त्रिकाल तीन २ पाठ करे तो ग्रह बाधा शान्त होती हैं। भूत प्रेतादि बाधा वाले को धूप दे पाठकर जल तथा पीली सरसों देने से शीघ्र उक्त बाधा से मुक्त होजाता हैं। भयङ्कर स्वप्न आते हों तो अन्त वाला मन्त्र भूर्जपत्र पर चन्दन से रवि मङ्गल को लिख बांधे तो अनेक उपद्रव शांन्त होते हैं। शत्रुपराजयार्थ पृ० ३२ के नीचे वाले ८४ अक्षर के मन्त्र को प्रथम ८४ सहस्र जपे तब १ माला जप कर पूर्वोक्त विधि से १०८ नित्य हवन करें। और भी इसके पाठसे धन धान्य पुत्रादि अनेक मनोरथ सिद्ध होते हैं। इति।

## अथ महानारायणास्त्र लिख्यते।

भैरवोवाच

देविदेवि महादेवि करुणाकर पुङ्गवि।
कथितान्युग्रमोक्तानि महास्त्राणि त्वयानघे ॥१॥
गरुडं वारुणं सांर्फ पार्वतं बलिदैवतम्।
अघोराख्यं महास्त्रश्च तथा पाशुपतं शुभम् ॥२॥
नारायणाख्यमस्त्रंच कथय स्वानुकंपया।



न कथ्यते महामातर्विमुञ्चामि तदा तनुम् ॥३॥

देव्युवाच

शृणुभैरव यत्नेन कथयामि तवाग्रतः।
कस्याप्यग्रे न कथितं मन्त्रं नारायणात्मकम् ॥४॥
महाभये महोत्पाते महाविघ्नेषु सङ्कटे।
धारणादस्त्रराजस्य भयं सर्वं निवर्तते ॥५॥
पूर्वं यद्ब्रह्मणे प्रोक्तं विष्णुना प्रभविष्णुना।
सृष्टिकाले महाविघ्नपराभूताय भैरव ॥६॥
तदहं सम्प्रवक्ष्यामि महाशत्रुनिबर्हणम्।
महाविघ्नोपशमनं महासङ्कट नाशनम् ॥७॥

ॐ अस्य श्रीनारायणास्त्रमहामन्त्रस्य आदि सृष्टिकर्ता ब्रह्माऋषिः। अतिजगति छन्दः त्रिपाद-विभूति नायकः श्रीमन्नारायणो देवता। ॐ बीजम् ह्रीं शक्तिः। ॐ नमः कीलकम्। मम सर्वारिष्ट शान्तये सकलाभीष्ट सिद्ध्यर्थे च नारायणास्त्रमहा-मन्त्र पाठे विनियोगः।

अथध्यानम्

ॐ ध्यायेत्सागरमध्यस्थं सहस्रादित्य तेजसम्।
अनन्त शक्ति संयुक्तं नारायणमनामयम् ॥८॥

ॐ ऐं ह्रीं श्रीं नमो भगवते नारायणाय सकल जगदुत्पत्ति स्थिति लय कारणाय अमित तेजसे अतुल बल पराक्रमाय महाविभूतिपतये ह्रीं ह्रीं

ह्रैं ह्रैं ह्रैं ह्रः सकल निगम गोचर गुण गणाय महा साम्राज्य विभूति विभूषिताय ध्वजातपत्र चामर व्यजन कुण्डल करकटिसूत्राङ्गदादि हार वलयमणि नूपुराद्यनेक मणि भूषण भूषिताय सहस्र शिरसे सहस्राक्षाय सहस्रभुजाय सहस्रपादाय शङ्ख चक्रगदापद्माय शार्ङ्गशरनन्दक खड्ग चर्म खेटक परशु पाश हलमुसल तोमर भुशुण्डीपाशांकुश कुन्तल शतघ्नी परशुवराभय विभूषित भुज सहस्राय बलि रञ्जित ब्रह्माण्ड मण्डलाय अनन्त नागेन्द्र सिंहा-सनाधिष्ठिताय सनकाद्यनेक मुनिगण सिद्धचारण विद्याधर किन्नर गन्धर्व यक्ष रक्षोरग गीर्वाण स्वर्गीत गुणार्णवाय सकल जगद्भयङ्कराय भूतप्रेत पिशाच यक्ष राक्षस डाकिनी शाकिनी वैताल मारीच ब्रह्म-राक्षस कुष्माण्ड वैनायक मातृगणोन्मथय २ क्षयं कुरु २ कुष्टदुष्ट ज्वर दाहापस्मारी प्रमेह विस्फोटक ब्रह्मापस्मारादि सर्व राजरोगान् विहिंसनाय मम भयं कुरु २ मम शत्रून्नुच्चाटय २ व्याधिभयं शमय २ चौरभयं नाशय २ महाशस्त्रास्त्राणि स्तंभय २ ममदुष्ट ग्रहान् भीषय २ ममद्वेषकरान् मोहय २ स्तम्भय २ कम्पय २ पातय २ बन्धय २ भूतग्रहान् बन्धय २ बालग्रहान् शमय २ यक्षपक्ष ज्वालात मोहारग्रहान् ज्वलय २ ज्वल २ प्रज्वल २ मथ २ पच २ दह २ उन्मथयोन्मथय ममशत्रून् विनाशय २ काराग्रहान् मोचय २ पापग्रहान् मोचय २ सुपर्णेन नागपाशं त्रोटय २ निगडपाशादीन् मोचय २ वह्नि वात सुपर्णनाग पर्वत पर्जन्यादि दुष्टशस्त्रास्त्र जन्य बन्धनानि शमय २ शत्रुकृत महापीड़ां शमय २ दुष्टरोग पीड़ां शमय २ दुष्टकृतपीड़ां शमय २ भूतप्रेत पिशाचादि पीड़ाम् शमय २ दुष्कर्मजन्य नरकभयात् मामुद्धरोद्धर मां सञ्जीवय २ महामृत्यु-भयान्मां मोचय २ ॐ ह्रां ह्रीं ह्रुं ह्रैं ह्रौं ह्रः खं खां खैं फट् हुं क्ष्रौं ॐ क्रौं हुं हुं हुं फट् २ ठः ठः ठः ह्रीं ह्रीं ह्रीं हुं हुं हुं एहि २ ज्वल २ प्रज्वल २ हुं फट स्वाहा। ॐ नमो नारायणाय नमस्ते नमस्ते नमस्ते।

देव्युवाच

इत्येतत्परमं गुह्यमन्त्रं नारायणात्मकम्।
त्वमेव संयतो भूत्वा धारयस्व निरन्तरम् ॥१०॥
महाभये महोत्पाते महाशत्रुसमागमे।
रणेदुर्गे विवादे च पाते चौराग्निजे भये ॥११॥
विषसर्प भये घोरे मारी राज भये तथा।
स्मरणान्मन्त्र राजस्य भयं सर्वं निवर्तते ॥१२॥
एकवारं पठेद्योवै व्याधि भूतादिनाशनम्।
दशवारं पठेद्योवै दशविद्या फलं लभेत् ॥१३॥
शतावर्तनमन्त्रेण सर्वशत्रुक्षयो भवेत्।

सहस्रावर्तनेनैव ग्रहपीड़ा निवर्तते ।१४।
अयुतावर्तनेनैव राज्यलक्ष्मीः स्थिराभवेत् ।
पञ्चविंशति सहस्रेण पञ्चतत्वाधिपो भवेत् ।१५
लक्षावर्तनमात्रेण लक्ष्मीपति सम्भवेत् ।
नदी तीरे पर्वताग्रे पिप्पलाग्रे शुभालये १६
गोष्ठे वृन्दावने रम्ये पठेन्मन्त्रमनूत्तमम् ।
त्रिलोह वेष्ठितं चैतद्धारयेद्दक्षिणे करे ।१७।
संग्रामे शस्त्रसंपाते शस्त्रधारानिबन्धनम् ।
त्वमपि श्रद्धयामन्त्र धारयस्व निरन्तरम् ।१८
सुरासुरैरजेयश्च भविष्यति न संशयः ।
तवस्नेहान्मया ख्यातं मन्त्रराजमनूत्तमम् ।१९
गोपायस्व प्रयत्नेन गुह्याद्गुह्यतरं परम् ।
सुशिष्याय प्रदातव्यं महाविद्या प्रजापिने ।२०।

इति श्रीमहाकाल संहितायां देवीभैरव सम्वादे महानारायणास्त्र मन्त्र कथनं नाम पंचविंशतितमः पटलः ।

## अथ श्रीहयग्रीव मन्त्र कवचम्

ॐ अस्य श्रीहयग्रीव कवचबीजमहा मन्त्राणां हयग्रीव ब्रह्मार्षिरनुष्टुप् छन्दः श्रीहरिहयग्रीवो देवता हं हसैं बीजम् ॐ ऐं हसूं वाक्शक्तिः । ह्रीं हयग्रीवाय कीलकम् । श्रींकवचम् ऐं अस्त्रम् । श्रीहयग्रीव प्रसन्नार्थे सर्वपुरुषार्थ समस्त विद्याप्राप्तये च



श्रीहयग्रीव कवच मन्त्र जपे विनियोगः ।

ॐ ब्रह्माऋषयेनमः शिरसि ॐ अनुष्टुप् छन्दसेनमोमुखे । ॐ हरिहयग्रीव देवतायै नमो हृदये । ॐ हं हसैं बीजायनमो नाभौ । ॐ श्रीं कवचायहुं नमो भुजयोः । ॐ ऐं हसूं वाक्शक्तये नमः कटिदेशे । ॐ ऐं अस्त्रायनमो जङ्घयोः । ॐ ह्रीं हयग्रीवाय कीलकाय नमः पादयोः । ॐ श्री हयग्रीव कवचबीजमहा मन्त्राणां जपेविनियोगाय नमः सर्वाङ्गे इतिऋष्यादिन्यासः ।

अथ करन्यासः ।

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । ॐ ह्रां पूर्णाय यज्ञात्मने अंगुष्ठाभ्यानमः । ॐ ह्रीं पूर्णायैश्वर्याय तर्जनीभ्यान्नमः । ॐ ह्रूं पूर्णाय शक्त्यात्मने मध्यमाभ्यान्नमः । ॐ ह्रैं पूर्णायानन्दात्मनेऽनामिकाभ्यान्नमः ॐ ह्रौं पूर्णाय वीर्यात्मने कनिष्ठिकाभ्यान्नमः ॐ ह्रः पूर्णाय सर्वात्मने करतलकर पृष्ठाभ्यानमः । इति ।

ॐ ह्रां पूर्णाय यज्ञात्मने हृदयायनमः । ॐ ह्रीं पूर्णायैश्वर्याय शिरसे स्वाहा । ॐ ह्रुं पूर्णाय शक्त्यात्मने शिखायै वषट् । ॐ ह्रैं पूर्णायानन्दात्मने कवचायहुम् । ॐ ह्रौं पूर्णाय वीर्यात्मने नेत्राभ्यां वौषट् । ॐ ह्रः पूर्णाय सर्वात्मने अस्त्रायफट् । इति

हृदयन्यासः ।

ॐ नमो भगवते हयग्रीवाय सर्वदिगात्मने भूर्भुवः स्वरोम् । इति दिग्बन्धनं कुर्यात् ।

अथ ध्यानम् ।

धवल नलिन निष्ट क्षीरगौरं कराग्रैर्जय वलय सरोजैः पुस्तकाभीष्ट दाने । दधतममलवस्त्राकल्प ज्वालाभिरामं तुरगवदनविष्णुं नौमि दैत्यारिजिष्णुम् । निखिल निगमवेद्यं वेदशास्त्रप्रकाशमखिलजगदुपाधिं निर्मलं निष्कलङ्कम् । अनुपममसुरारैर्वासुदेवस्यतेजो वितरतु तुरगास्यं मङ्गलं श्रीमुखंनः ॥२॥

शेषधर्मादि पीठे वै श्वेताब्ज कर्णिकोपरि उपर्युपरिसंस्मृत्य वन्हि सूर्येन्दु मण्डले ।१। संस्थितंच हयग्रीवं शाश्वतंचन्द्रवर्णकम् । श्रीभूनीलादि संयुक्तं शङ्खचक्रधरंविभुम् ॥२॥ व्याख्या मुद्रा करं शान्तं श्रीमत्कौस्तुभ धारिणं । सवलिङ्कार संयुक्तं वस्त्रस्त्रग्रत्नकादिभिः ॥३॥ चन्दनागरु-कर्पूरैर्भुजद्वये सुलेपनं । ध्यायेद् धृतकर्णिका मध्ये सर्वं दैवैः सुपूजितम् ।४। धारयेत्तस्य निर्माल्यं स्वदेहे चन्दनादिकम् । जपकाले विशेषेण पूर्वतद्धिर्ार सदा ॥५॥ न्यासंकृत्वाथ पूर्वोक्तं हयग्रीवस्य मन्त्रवित् । धृत्वामुद्रां हयग्रीवं चक्रं व्याख्यान पुस्तके ।६। धेनु कौस्तुभमुद्रादीनकृत्वातज्जप माचरेत् । एवं ध्यानादि संयोगात्सर्व विद्यादिकं भवेत् ॥७॥ आयुः श्रीराज्य लाभंच रोग शत्रुक्षयादिकम् । अष्टैश्वर्यादिकं सम्यक् देहान्ते मोक्षमुत्तमम् ॥८॥ लभतेनात्रसन्देहः सत्यंसत्यं चतुर्मुख इति संक्षेपतः प्रोक्तं सर्वेषां ज्ञानं सिद्धये ॥९॥



( प्रार्थना द्वादशकम् )

ॐ नमो वेदान्त निधये शास्त्राणां पतये नमः ।
यज्ञानां निधये तुभ्यं कर्मणां फलदायिने ॥१॥
विद्याधराय योगाय वागीशाय नमोनमः ।
अचिन्त्याय नमोनित्यं सर्वज्ञानात्मनेनमः ॥ २ ॥
ऋग्मूर्तिस्त्वं महावाहो यजुर्मूर्तिरधोक्षजः ।
साममूर्तिस्त्वमेवाद्यः सर्वदाथर्व मूर्तिमान् ॥३॥
सर्वज्ञानमयोऽसित्वं हतज्ञानोऽहमच्युत ।
देहिमे सर्व विज्ञानं हयग्रीव नमोस्तुते ॥४॥
प्रपन्नोऽहं हयग्रीव प्रपन्नार्ति हरं हरिम् ।
यस्यप्रसाद लेशेन वागीशत्वमुपाविशत् ॥५॥
धन्योऽहं कृतकृत्तोऽहं मुक्तोऽहं कर्मबन्धनैः ।
हयग्रीव पदाम्भोज स्मरणेनैव चेतसा ॥६॥
श्रीभूनीलादिसहितं सर्वाभरण भूषितम् ।
हयग्रीवमहंवन्दे चक्रपद्मधरं हरिम् ॥७॥
शङ्खचक्रगदापद्म ज्ञानपुस्तकधारिणम् ।
हयग्रीवमहंवन्दे विद्यैश्वर्य प्रदायकम् ।
शुद्धस्फटिकसङ्काशं पुण्डरीकायतेक्षणम् ।
सर्वशास्त्रप्रदातारं हयग्रीवमुपास्महे ॥९॥
ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्व विद्यानां हयग्रीवमुपास्महे ॥१०॥
शङ्खचक्रमहामुद्रापुस्तकाढ्यं चतुर्भुजम् ।

सम्पूर्णेन्दुचन्द्र सङ्काशं यह्ग्रीवमुपास्महे॥ १२॥
विशुद्धविज्ञानघन स्वरूपं शिवादिविश्वाननवन्द्यद्म
यानिं देहभृतांश रण्यं देवं हयग्रीवमहंप्रपद्ये॥ १३
अथ सर्व विद्या ऐश्वर्यप्रद हयग्रीव बीजादि मूलमन्त्र संग्रह :

ॐ ऐं श्रीं ह्सौं ॐ नमोभगवते हयग्रीवाय विष्णवे मह्यं मेधां प्रज्ञां प्रयच्छ २ स्वाहा। ॐ श्री ह्सैं। ऐं ऐं ऐं क्लीं क्लीं सैंः सैंः ह्रीं ॐ नमोभगवते मह्यं मेधां प्रज्ञां प्रयच्छ २ स्वाहा। ॐ ह्सैं अमृतं कुरु २ स्वाहा। ॐ ह्सैं हुं फट् स्वाहा। ॐ ह्सौं सकल साम्राज्येन सिद्धिं कुरु कुरु स्वाहा। ॐ नमो भगवते हयग्रीवाय सर्ववागीश्वरेश्वराय सर्व वेद मयाय सर्वविद्यां मे देहि २ स्वाहा। ॐ जं ऐं। ॐ ह्रां ह्रैं हयग्रीवाय स्वाहा।

ॐ ह्रीं क्लीं श्रीं ऐं आं क्रौं ह्सौं हयाननाय मयि सर्व विद्यां वेदशास्त्र सर्वज्ञत्वं विदापय २ यंग्लैं वं हुं फट् स्वाहा।

ॐ ह्रां नमो भगवते वागीश्वरेश्वराय सर्वाध्याय सर्व विद्या प्रवर्त्तकाय श्रीमद्धयमुखाय आं क्रौं ह्रौं हुं फट् स्वाहा। ॐ ऐं श्रीं ह्सौं हयग्रीवाय नमः। ॐ ह्सूं हयशिरसे नमः। ॐ सं हं हुं हूं ह सौं, हय वदनाय स्वाहा। ॐ ह्रौं क्लीं श्रीं ह्रीं हयग्रीवाय स्वाहा। ॐ नमो भगवते सिद्धिताङ्गाय हयग्रीवाय



लक्ष्मी प्रज्ञाहयाय मेधा सरस्वतीहयाय रतिर्भूतिहयाय प्रीतिर्विद्याहयाय कीर्त्तिः श्रीहयाय कान्तिर्वागीशहयाय तुष्टिर्विद्याविलासहयाय पुष्टिर्हयहयनाद मर्दनाय ममसर्वाभीष्टप्रदाय मूलमूर्तये नमोनमः स्वाहा। ॐ वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः प्रचोदयात्। इति गायत्रीमन्त्रादि।
हयग्रीव गायत्री का भी जप करना चाहिये। अथ सिद्धचतुष्टयमन्त्रः।

ॐ ऋग्यजुः साम रूपाय वेदाहरण कर्मणे।
प्रणवोद्गीथवचसे महाश्वशिरसे नमः॥१॥
ॐ उद्गीथ प्रणवोद्गीथ सर्व वागीश्वरेश्वर।
सर्व वेदमयाचिन्त्य सर्व बोधय बोधय॥२॥
ॐ विश्वोत्तीर्ण स्वरूपाय चिन्मयानन्दरूपिणे।
तुभ्यन्नमो हयग्रीव विद्याराजाय विष्णवे॥३॥
ॐ आचक्राय विचक्राय सुचक्राय धीचक्रणे।
ज्वालाचक्राय चेत्युक्त्वा महाचक्राय ते नमः॥४॥

## श्री हयग्रीव मूलमन्त्र स्तुति द्वादशकम्

ॐ नमस्तुभ्यं जगन्नाथ लक्ष्मीकान्त परात्पर।
नमो वाचं पुरश्चक्रे विद्याराजाय विष्णवे॥१॥
ॐकारोद्गीथ रूपाय ऋग्यजुः साममूर्तये।
नमोऽस्तु देवदेवाय वांछितार्थ प्रयच्छ मे॥२॥
अज्ञान तिमिरं छिन्धि ज्ञानमाशु प्रयच्छ मे।

देहि मे सम्पदं देव हयशीर्ष नमोऽस्तुते ॥३॥
भूत प्रेतपिशाचादीन् छिन्धि देव जनार्दन ।
ज्वरादीन् सकलान् रोगान् नाशयाभ्युदयं कुरु ॥४॥
दारिद्र्यं सकलं छिन्धि कुरु सौभाग्यभाजनम् ।
शत्रून् नाशय मे देव हयग्रीव नमोऽस्तुते ॥५॥
मेधां विद्यां बलं प्रज्ञां सम्पदं पुत्र पौत्रकान् ।
देहि मे देवदेवेश हयग्रीव नमोस्तुते ॥ ६ ॥
करकोट मुखान् सर्पान् सविषान् विलयं नय ।
अमृतं कुरु मां देव हयग्रीव नमोस्तुते ॥७॥
स्त्री वश्यं राज्यवश्यञ्च जनवश्यं परात्पर ।
कुरु देवाङ्गनावृन्दसेव्यमान पादाम्बुज ॥८॥
हंसाय परमेशाय चन्द्रमण्डलवासिने ।
नमो हयोत्तमाङ्गाय वाञ्छितार्थ प्रदायिने ॥९॥
ऋग्यजुः सामरूपाय ऋताय महसे नमः ।
ऋत्वेशबिम्ब मध्यस्थ राजीवासन भाजिने ॥१०॥
वेद वेदान्त वेद्याय वेदाहरण कर्मणे ।
वेदावह महामोहध्वंसिने ब्रह्मणे नमः ॥११॥
प्रज्ञा प्रदायिने नित्यं भजतां भावितात्मनाम् ।
प्रणवोद्गीथ वचसे प्रणतिं प्रति पादय ॥१२॥
मन्दार कुन्द स्फटिक महानि चारु वर्चसे ।
मनीषाप्रद देवाय महाश्वशिरसे नमः ॥१३॥
इतिद्वादशमन्त्रैश्च नमस्कृत्य जनार्दनम् ।



प्रसन्न वदनः प्राह पाराशर्य तपोनिधिः ॥१४॥

## अथ श्रीहयग्रीव मूल कवचम्

ऋषिरस्य हयग्रीवो देवता च स एवहि ।
प्रोक्तमानुष्टुभं छन्दः सर्वार्थे विनियुज्यते ॥१॥
कलशाम्भोधि सङ्काशं कमलायत लोचनम् ।
कलानिधिं कृतावासं कर्णिका पीठवासिनम् ॥२॥
ज्ञानमुद्राक्षवलय शङ्खचक्रोल्लसत्करम् ।
भूषाकिरण सन्दोह नीराजित दिगन्तरम् ॥३॥
वक्त्राद्विनिर्गतोद्दाम वाणीसन्तानशोभितम् ।
देवता सार्व भौमं त ध्यायेदिष्टार्थ सिद्धये ॥४॥
ॐ हयग्रीवः शिरः पातु ललाटं चन्द्रमध्यगः ।
शास्त्रदृष्टिर्दृशौ पातु शब्दब्रह्मात्मकः श्रुतिम् ॥५॥
घ्राणं गन्धात्मकः पातु वदनं यज्ञसम्भवः ।
जिह्वां वागीश्वरः पातु मुकुन्दो दन्तसंहतिम् ॥६॥
ओष्ठौ ब्रह्मात्मकः पातु पातु नारायणोऽधरम् ।
शिवात्मा चिबुकं पातु कपोलौ कमलाप्रभुः ॥७॥
विद्यात्मा पिठरं पातु कण्ठं नादात्मको मम ।
भुजौ चतुर्भुजः पातु करौ दैत्येन्द्रमर्दनः ॥८॥
ज्ञानात्मा हृदयं पातु विश्वात्मा कुचयुग्मकम् ।
मध्यमं पातु सर्वात्मा पातु पीतांबरः कटिम् ॥९॥
कुक्षिं विश्वम्भरः पातु वलिभङ्गोऽवलित्रयम् ।

नाभिं मे पद्मनाभोऽव्याद्गुह्यं गुह्यार्थ बोधक ।१०
ऊरू दामोदरः पातु जानुनी मधुसूदनः ।
पातु जङ्घे महाविष्णुर्गुल्फौ पातु जनार्दनः ।११।
पादौ त्रिविक्रमः पातु पातु पादाङ्गुलीं हरिः ।
सर्वाङ्गं सर्वगः पातु पातु रोमाणि केशवः ।१२।
धातूनार्तिहरः पातु भार्यां लक्ष्मीपतिर्मम ।
पुत्रान्विश्व कुटुम्बी मे पातु बन्धून सुरेश्वरः।१३।
चित्तमिन्द्रात्मकः पातु ब्रह्मात्मा शत्रुसंहने ।
प्राणान्वाय्वात्मकः पातु क्षेत्रं विश्वम्भरात्मकः १४।
वरुणात्मा रसान्पातु व्योमात्मा हृद्गुहान्तरम् ।
दिवारात्रं हृषीकेशः पातु सर्वं जगद्गुरुः ॥१५॥
विषमे संकटे चैव पातु क्षेम करो मम ।
सच्चिदानन्द रूपो मे ज्ञानं रक्षतु सर्वदा ॥१६॥
प्राच्यां रक्षतु दिव्यात्मा चाग्नेयां ज्ञानदीपकः ।
याम्यां बोधप्रदः पातु नैऋत्यां चिद्घनः प्रभुः।१७
विद्यानिधिस्तु वारुण्यां वायव्यां चिन्मयो मम
कौवेर्यां वेद वित्पातु पात्वीशान्यां जगद्गुरु।१८
ऊर्ध्वं पातु जगत्स्वामी पात्वधस्तात्परात्परः ।
रक्षां विना तु यत्स्थानं रक्षत्वखिलनायकः ।१९।
एवं न्यस्तशरीरेऽसौ साक्षाद्वागीश्वरो भवेत् ।
आयुरारोग्यमैश्वर्यं सर्वशास्त्रप्रवक्तृताम् ।२०।
लभते नात्र सन्देहो हयग्रीव प्रसादतः ।



इतीदं कीर्तनीयञ्च कवचं देव पूजितम् ॥२१॥
जपेद् द्वादश मन्त्राणां पुरश्चर्या मुनीश्वर ।
लक्षसंख्या जपित्वा तु ह्याद्यन्ते पञ्जरं न्यसेत् ।२२।
किम्वा द्वादश सहस्रं सर्वत्र जयमियष्यते ।

इति श्रीहयग्रीव कल्पे नारद पराशर सम्वादे श्रीहयग्रीव स्तुति
बीज मन्त्रादि कवचं समाप्तम्

## श्री हयग्रीव मन्त्र जप विधिः ।

सर्व प्रथम हयग्रीव भगवान के चित्र मे शालग्राम मूर्ति मे अथवा हयग्रीव यन्त्र मे हयग्रीव भगवान की श्वेत पुष्प श्वेत भागादि से षोडशोप चार पूजा कर लेवें । देशकालादि उच्चारण कर प्रत्येक मन्त्र के कार्यानुसार भिन्न भिन्न संकल्प करके करन्यासादि करें । ध्यान पूर्वक कवच पाठ तथा स्तुति करके मन्त्र जप करें : इच्छित सिद्धि फल प्रद मन्त्र तबही होता हैं जब कि गुरुमुख से श्रद्धा पूर्वक ग्रहण कर अनुष्ठान किया जाय अस्तु ।

इस कवच मे ७ मन्त्र श्लोक बद्ध हैं । एवं बीज पूर्वक १२ मूल मन्त्र हैं । इनको भिन्न भिन्न कार्यों के लिये भिन्न २ विधियां हैं १२ मन्त्रों का उदयास्त पर्यंत जल मे खड़ा हो सूर्याभिमुख सहस्र पाठ अथवा पांच चार तीन सौ पाठ तीन मास करे तो असाध्य कार्य भी सिद्ध होजाता है । हयग्रीव के प्रसन्नार्थ रविवार को विशेष मन्त्र जप हवन करना चाहिये । १२ मन्त्रों का दशसहस्र जप करने से मन्त्र प्रसिद्ध होजाता है । ऐसे ही विधि पूर्वक बीज मन्त्रों के अक्षर संख्या से चतुर्गुण सहस्र जप करने से विद्या साधन होगा । १२ मन्त्रों से गऊ का दूध १० बार अभिमन्त्रित करके पीवे तो ज्वरादि रोग शान्त हो, विद्या बहुत ही शीघ्र आवे । अष्टोत्तर शत या

२८ बार २४ मूल मन्त्रों से घी शक्कर दही शहद बदाम चिरोंजी पिस्ता मखाना गरी ये सब मिलाय ४१ दिन हवन करें और अवशेष प्रसाद खावे तो विद्यालाभ ग्रह बाधा भूतादि बाधा अपमृत्यु रोग शान्ति शत्रु पराभव इत्यादि कार्य शीघ्र सिद्ध होते हैं। जलभस्म सरसोंरेती को १०८ बार मन्त्र कर जल रोगी को पीला देवे अन्य वस्तु घरम छिड़क देवे तो घरके सब रोग दोष विघ्न शान्त होते हैं पूर्व्यार्क मे लोह की कील बनवाकर उक्त मन्त्रोंसे १०८ मन्त्र कर घर के कोनों मे रवि मङ्गल को गाड़ देवे तो घर मे किसी प्रकार की बाधा नहीं आ सकती कण्ठ प्रमाण जल मे अष्टाक्षर बीज मन्त्र की ११ माला ४१ दिन जपे तो कविता शक्ति एवं सरस्वती प्रकाश हो। हयग्रीव मन्त्रों मे जिन २ कामों के नाम आये वे सब अवश्य सिद्ध होते हैं। करनेवाला देवतान्तर रहित शुद्ध व्यवहार चक्रांकित हयग्रीव उपासक हो। और भी विधि लिखी है कि

पृथ्वी कामी गूलर में धनार्थी बेल के नीचे स्त्री प्रेमी आमतले, ज्ञाने-च्छु तुलसी बन विद्यार्थी नदी तीर स्थिर कार्य दर्वत पे, धान्य कामी शुभ क्षेत्र, पशु कामी गोशाला मे पुत्रकामी गर्भ स्थान मे वश्यार्थ अशोक मूल मे तथा धतर भिलावां मदार कनेर कुचला इनके नीचे दक्षिणाभिमुख शत्रुनाम पूर्वक दश हजार मन्त्र से जपे तो शत्रु रोगाक्रान्त हो जायगा। तुलसी वन मे दूध सींचे तो अच्छा होगा। हयग्रीव यन्त्र पूजन पूर्वक कलश स्थापन कर नित्य एक सहस्र पुत्रार्थ मन्त्र जपे और दम्पति को कलश जल से नित्य अभिषेक करे छः मास करनेसे वन्ध्या के भी कुल धन वर्धक पुत्र हो जाता है "ॐ जं ऐं" इस मन्त्र का विधि पूर्वक एक लक्ष जप सौ दिन करे तो हयग्रीव प्रत्यक्ष हो जाते हैं। ऐसे ही श्री हयग्रीव कल्प के दो पटल मे उक्त मन्त्रों के यन्त्र पूर्वक शतशः प्रयोग प्रस्तुत हैं। विधि पूर्वक करने वाला शीघ्र सिद्धि को प्राप्त होता है। इससे विशेष अनुष्ठान विधि संशोधक से मिलेगी। इति।

# अथ श्री आचार्यरक्षा कवचम्

ॐ अस्य श्रीगुरु परम्परानुगत स्वाचार्य रक्षा कवचस्य प्राचीनमद्धर्म रक्षक ऋषिः, अनुष्टुप् छन्दः, श्री सम्प्रदायाचार्यो देवता, श्रीमूलपरांकुशेतिस बीजम, मुनियामुनेति शक्तिः रम्य जामातृ इति कीलकम्, श्रीरामाचार्येति कवचम्, अस्मदाचार्येत्यस्त्रम्. श्रीलक्ष्मीनाथेति परमोमन्त्रः, मम सकल विधि भगवद् भागवताचार्याभिमान सिद्धयर्थे श्री आचार्य रक्षा कवचं जपे विनियोगः तथा च "गायत्री गुरु मन्त्राभ्यां करन्यसादि कारयेत्। ऋष्यादि न्यासस्तत्रैव नियोगेन सदा पठेत्।" अथध्यानम्—

ॐ लक्ष्मी नाथ समारंभां नाथ यामुन मध्यमाम्। अस्मदाचार्य पर्यंतां वन्दे गुरुपरंपराम् ॥१॥ अस्मद् गुरु समारभ्य श्रीकान्तावधिमत्तमाम्। श्रीवं-ष्णवार्यं निःश्रेणीमाश्रये सद् गति प्रदाम॥२॥ अस्मदाचार्य प्रारंभां वरयती-न्द्रमध्यध्यमाम् लक्ष्मीवल्लभ पर्यंतां वन्दे गुरुपरम्पराम्॥३॥ पूर्वाचार्य चरित्राणि दिव्यसूरियशांसि च। उभयतत्वानु सिद्धयर्थे मोक्ष मार्गं सुचिन्तयेत्। अर्थ पंचक तत्वज्ञस्तत्वत्रयार्थ कोविदः ॥३॥ रहस्य त्रय मर्मज्ञश्चाकार त्रय भेद वित्। वेदान्तोभय पारज्ञः सर्व शास्त्रर्थसार वित् ।४। श्रीतत्व चिन्ह सम्पन्ना यः प्राज्ञोगुरु सन्निधौ। ध्यात्वा हृदि गुरून् दिव्यान् गुरु रक्षा पठे-त्पुमान् ॥५॥ इति ध्यानम्।

ॐ श्रीमन्नारायणः साक्षान्मस्तकं पातु सर्वदा। जगन्माता महालक्ष्मी भालं मे पातु भार्गवी ॥६॥ विष्वक्सेनो गणाध्यक्षो भृकुटीं पातु पार्षदः। मूलस्वामी शठारिस्तु पातु नाथ मुनिर्दृशौ ।७। पद्माक्षः पातु कर्णौ मे राम मिश्र रमाश्रयः यामुनार्यो महा योगी घ्राणं रक्षतु देशिकः ८॥ पूर्णाचार्यो दया पूर्णः कपालौ पातु पंचधा। वेद रूपधरो नित्यो रामानुज जगद् गुरु ॥९॥ श्रीसम्प्रदाय वर्यो मे पातु श्रीभाष्यकृन्मुखम् वतु सप्तति पीठस्था द्वादश दिव्य सूरयः ॥१०॥ पूर्वाचार्या दशं ते तु रक्षन्तु दन्त तालु कम्। विद्या निधिस्तु गोविन्दः पातु जिव्हां परार्थदाम् ॥११॥ भट्टाक... वेदान्त द्वय निष्णातो वेदान्तो पा... भाष्यकारस्तु कण्ठं रक्षतु कोविदः।

मेऽन्सको ॥१२॥ कलिजिद्देशिकः श्रीमान् भुजौ पातु भवार्णवात् । कृष्णपाव महायोगी करौ पातु परार्थेदृक् ॥१३॥ लोकार्य गुरुवर्यो मे हृदयं पातु सूत्रदः । श्रीशैलेशो जगत्स्वामी मध्यं मेऽवतु सर्वदा ।१४। दिङ्नाम कुद्दरा चारे श्रीधर्म स्थापनोत्सुकः । रम्य जामातृ योगीन्द्रः श्रीमान बरबरो मुनिः ।१५। मोक्षदः सर्व सत्वानां नाभिपातु जगद् गुरुः । कुक्ष्यष्ट नाडिकां पातु मेऽष्टौ दिग्गज नायका ।१६। अन्ये श्री वैष्णवाचार्याः स्वयमाचार्य वंशजाः । अहोबलादि गद्यस्थाः परकालो मुनित्रयः । ग्रन्थ रत्न कृदाचार्यो देशिकाः पान्तु सर्वतः ।१४। देवाचार्यः कटिं पातु रम्य जामातृ शासनात् । उत्तरे तु समागम्य श्री पद्धति प्रचार कृत् । ८। हर्याचार्यो हरिः साक्षान्निम्नाङ्गं पातु मामकम् । सर्वथा राघवाचार्यो गात्रं मे पातु देशिकः ।१९ रामाचार्यो राम मूर्ती रामानन्दो जगद् गुरुः द्वादश शिष्य संयुक्तः सर्वांगं पातु सर्वदा ।२०। (तेषां हि द्वादशाच शिष्य प्रशिष्य सेवकाः । जन्म जन्मान्तरे वाऽपि रक्षन्तु सर्वथा हि माम् ।२१। ब्रह्मेश सनकाद्याश्च श्रीमाध्वविष्णु निम्बार्काः । व्यास वल्लभ नित्याद्या वैष्णवाः शं दिशन्तु मे ॥ अन्येपि वैष्णवाचार्याः सम्प्रदाय परिष्कृताः । त्रिधा विकर्म कृत्येभ्य। पान्तु मां वै पदे पदे।२२। जलास्थलेवने घोरे व्याघ्रभूतादि संकटे । शत्रु राज्यादि विघ्नेषु त्रितापेषु गदेषु च ।२३। मार्केश ग्रह जालेषु सर्वारिष्ट फलेषु च । मत्यु कालादि दोषेषु पान्तु भागवतास्तु माम् ।२४। ज्ञान-वैराग्य भक्ति श्रीयशः कीर्त्ति प्रकाशिनीम् । रक्षैतां वैष्णवीं सत्यां फलं सद्यो विवर्द्धिमोम् ।२५। यः पठेद्वैष्णवावो नित्यं रक्षां भागवतोत्तमः । सर्व पापैर्विनिर्मुक्तो भक्तिमान्स भवेत्पुमान् ।२६। श्री सम्प्रदाये परमं क नैष्ठिकाः स्वाचार्य रक्षा कवचं पठन्तु ये । मोदन्तु सद्धर्मपथानुगामिनो रक्षन्तु शिष्टार्य परम्परा क्रमम् ।

तेषां द्वादश शिष्याश्च । शिष्य प्रशिष्य सेवकाः



श्री मज्जगद्गुरु रामानुजाचार्य
श्री सम्प्रदायाचार्य
श्री स्वामी राघवाचार्य जी महाराज



श्रीधाम मठ रामवर्णाश्रम, रामकोट, अयोध्या, उत्तरप्रदेश
मोबा. 09415370651, 09792061008 ☎ : 05278-233783
Website : bhagwatkatha.net
Email : saurabh248@gmail.com